श्रीसोमनाथसंस्कृतविश्वविद्यालयग्रन्थमाला-२८

# वाक्यार्थज्योतिः

# Vākyārathajyotiḥ

अङ्कः - ५ वर्षम् - २०१८-१९

**प्रधानसम्पादकः**

**प्रो. (डॉ.) ललितकुमारः पटेलः**
प्र. कुलपतिः, श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्

**सम्पादकः**

**डॉ. नित्यानन्दः ओझा,** सहायकाचार्यः
श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्





**श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्**
(राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा A+ श्रेण्या प्रत्यायितः)

श्रीसोमनाथसंस्कृतविश्वविद्यालयग्रन्थमाला-२८

# वाक्यार्थज्योतिः
# Vākyārathajyotiḥ

अङ्क : - ५ वर्षम् - २०१८-१९

**प्रधानसम्पादकः**

**प्रो. (डॉ.) ललितकुमारः पटेलः**

प्र. कुलपतिः, श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्

**सम्पादकः**

**डॉ. नित्यानन्दः ओझा,** सहायकाचार्यः

श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्








**श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्**

(राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा A+ श्रेण्या प्रत्यायितः)

**प्रकाशकः -**

**डॉ. दशरथजादवः**

कुलसचिवः,

श्रीसोमनाथसंस्कृतयुनिवर्सिटी,

राजेन्द्रभुवनरोड, वेरावलम् - ३६२ २६५

गीर-सोमनाथजनपदम्, गुजरातम्

दूरभाषः - ०२८७६-२४४५३२, फेक्स - २४४४१७

www.sssu.ac.in

**सहसम्पादकः समन्वयकश्च -**

**डॉ. कार्तिकः पण्ड्या**

संशोधनाधिकारी,

श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्



संस्करणम् : प्रथमम्

वर्षम् : जुलाई-२०२३

प्रतिकृतयः : ५००

आई.एस.बी.एन. : ९७८-९३-८३०९७-५८-६

मूल्यम् : रु. ३००/-

मुद्रकः : झेनिथ ग्राफीक, व्रज-प्लाझा, जैन देरासरमार्गः,
वेरावलम् - ३६२ २६५, गीर-सोमनाथ-जनपदम्, गुजरातम्

Shree Somnath Sanskrit University Granth Series - 28

# VĀKYĀRATHAJYOTIḤ
# वाक्यार्थज्योतिः

Issue - 5 Year - 2018-19

*Chief Editor*
**Prof. (Dr.) Lalitkumar Patel**
Vice Chancellor (I/c.)
Shree Somnath Sanskrit University, Veraval

*Editor*
**Dr. Nityanand Ojha,** Assistant Professor
Shree Somnath Sanskrit University, Veraval







**Shree Somnath Sanskrit University, Veraval**
(Accredited by NAAC with A+ Grade)

**Published by -**

**Dr. Dasharath Jadav**
Registrar,
Shree Somnath Sanskrit University, Veraval
Rajendra Bhuvan Road, Veraval - 362265
Dist. - Gir-Somnath, Gujarat
Phone - 02876-244532, Fax - 244417
Website - www.sssu.ac.in

**Assistant Editor & Co-ordinator -**

**Dr. Kartik Pandya**
Research Officer,
Shree Somnath Sanskrit University, Veraval



| | |
|---|---|
| Edition | : Frist |
| Year | : July-2023 |
| Copies | : 500 |
| ISBN | : 978-93-83097-58-6 |
| Price | : Rs. 300/- |
| Printed by | : Zenith Graphic, Vraj Plaza, Jain Derasar Road, Veraval - 362265, Dist Gir-Somnath, Gujarat |

9383097586

# शुभाशंसनम्

परमकृपालोः भगवतः सोमनाथस्यानुकम्पया श्रीसोमनाथसंस्कृत-विश्वविद्यालयस्य विदुषामध्यापकानां शास्त्राध्ययनप्रवृत्तिविकासाय, संशोधनविकासाय स्तरवर्धनाय छात्रच्छास्त्रश्रवणाभ्यासाय च प्रतिवर्षं वर्षं यावत् वाक्यार्थपरिषदः सत्राणाम् आयोजनं विधीयते। तत्र अध्यापकाः स्वाभिलषितविषयमधिकृत्य संशोधनं च विधाय शोधपत्रप्रस्तुतिं कुर्वन्ति, ततश्च प्रश्नोत्तररूपेण चर्चा परामर्शः विमर्शश्च भवति। एवमियं परिषद् वाक्यार्थ इत्यभिधानं सार्थकीकरोति।

अस्यां परिषदि खलु येषां संशोधनपत्राणां प्रस्तुतिः भवति, ततच्छोधपत्राणां सङ्ग्रहं कृत्वा परीक्षणं च विधाय वाक्यार्थज्योति इति ग्रन्थे २०१८-१९ इति शैक्षणिकवर्षे सञ्चालितायाः वाक्यार्थपरिषदः विविधेषु सत्रेषु प्रस्तुतानां चितानां परीक्षितानाम् उत्तमानां संशोधनलेखानां सङ्ग्रहो वर्तते। एतत् वाक्यार्थज्योतिः पञ्चदशलेखान् (१५) अधिकृत्य प्रकाशतां सङ्गच्छते। संस्कृतं प्रति पाश्चात्यविदुषामनुरागः, सौगन्धिकाहरणव्यायोगस्य विमर्शः, उत्तररामचरिते स्त्रीधर्मः, महाकविकालिदासस्य रूपकेषु रसनिरूपणम्, वाल्मिकीरामायणे हनुमतः व्यक्तित्वम्, ज्योतिषशास्त्रे दर्शनानां प्रभावः, भूमाधिकरणविचारः, संस्कृते आदर्शसूचनपद्धतिः, ग्रहणविमर्शः इत्यादिशीर्षकस्थाः संशोधनलेखाः अध्यापकप्रतिविशेषं शोधरतिं चाभिव्यञ्जन्ति।

तत्तच्छास्त्रनिपुणाः विभागेषु सेवारताः अध्यापकाः विविधवाक्यार्थ-परिषद्द्वारा समायोजितेषु वाक्यार्थं च कृत्वा कृत्वा स्वस्य ज्ञानदृढीकरणपूर्वकं स्तरवर्धनं विहितवन्त इति मेऽनुभवः। एवमेव सर्वदा प्रवहतु इयं वाक्यार्थज्ञानगङ्गा विश्वविद्यालये। प्रवहमानायामस्यां गङ्गायां विद्वांसः अध्यापकाः सदा शास्त्रालोडनं कुर्वन्तः स्वस्तरवर्धनाभिवृद्धिः कुर्युः इति भगवन्तं सोमनाथं प्रार्थये। शोधसङ्ग्रहात्मकोऽयं ग्रन्थः विदुषां संशोधकानां छात्राणां च महते उपकाराय भवतु।

**भवदीयः**

प्रो. (डॉ.) ललितकुमारः पटेलः
प्रभारिकुलपतिः

# सम्पादकीयम्

भगवतः श्रीसोमनाथस्य अनुकम्पया श्रीसोमनाथसंस्कृतविश्वविद्यालयः सदैव भारतीय–ज्ञानपरम्परायाः अभिवर्धनं संरक्षणञ्च कुर्वन् आगच्छति। अध्यापनेन सह एतस्याचार्याः विविधेषु शास्त्रेषु शोधकार्यमपि कुर्वन्तः सन्ति। विदुषां शास्त्रीयान्वेषणेन सर्वे जनाः विज्ञाः भवेयुः एतदर्थं विश्वविद्यालयेऽस्मिन्प्रतिवर्षं ''वाक्यार्थपरिषद् अस्याः परिषदः आयोजनं भवति। अस्यां परिषदि अध्यापकानां स्वशास्त्रविषयकनूतनान्वेषणस्य प्रस्तुतिः भवति। अत्र न केवलं प्राध्यापकाः अपितु छात्राः अपि स्वाभाविकरीत्या प्रश्नोत्तराणि कुर्वन्ति, येन विषयस्य सुस्पष्टता समेषां कृते समानरूपेण सञ्जायते। विषयस्य स्पष्टीकरणाय शमायाः समाधानाय च न स्वयं पत्रप्रस्तोता प्रत्युत् सत्राध्यक्षः तथा च सदसि विराजमानाः विद्वांसः अपि उत्तराणि ददति। येन प्रस्तुतो विषयः सुस्पष्टः, ग्राह्यः, नूतनज्ञानवर्धको भवति।

प्रतिवर्षमिव २०१८–१९तमे शैक्षणिकवर्षे अपि वाक्यार्थपरिषदः आयोजनम् अभवत्। अस्यां परिषदि प्रस्तुतशोधपत्राणां पुनः विद्वद्भिः समीक्षा जाता। अनन्तरं समीक्षितशोधपत्रेषु सप्तदशानां (१७) शोधपत्राणां ग्रन्थेऽस्मिन् प्रकाशनं क्रियते। इमानि महत्त्वपूर्णानि शोधपत्राणि सर्वेषां कृते सुलभानि भवेयुः तदर्थं श्रीसोमनाथसंस्कृतविश्वविद्यालयः शोधपत्राणां प्रकाशनमपि करोति। विश्वविद्यालयस्य माननीयानाम्, परमक्रियाशीलानाम्, विविधप्रशासनिककार्येषु कृतसहायकानाम्, संस्कृतजगति स्वनाम्नधन्यानाम्, संस्कृतभाषायाः कल्याणे सर्वविधसंलग्नानाम्, बहुविधपुरस्कारभाजानाम्, श्रीसोमनाथसंस्कृतविश्व–विद्यालयस्य कुलपतिपादानां प्रो. (डॉ.) ललितकुमारपटेलमहोदयानां मार्गदर्शनेन अयं ग्रन्थः प्रकाशितो भवति तदर्थं तान्प्रति कार्तज्ञ्य कुसुमानि विनिवेदयामि। अथ च प्राशासनिककार्येषु दक्षाः, प्रथितयशस्काः,

श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य कुलसचिवाः डॉ. दशरथजादव–महोदयाः अपि अमुस्मै ग्रन्थाय प्रकाशकीयमनुमोदनं कृतवन्तः, अतः तेभ्योऽपि आभारं प्रकटयामि। अपि च ये अध्यापकाः शोधपत्राणि प्रस्तुतवन्तः एवं येषां शोधपत्राणि अस्मिन् वाक्यार्थज्योतिः इति ग्रन्थे प्रकाशितानि भवन्ति ते सर्वे धन्यवादार्हाः वर्तन्ते। अस्य ग्रन्थस्य प्रकाशने प्रकाशनविभागेन सह ये कर्मचारिणः साहाय्यं कृतवन्तः तेषां कृते कार्तज्ञतां विनिवेदयामि।

**सम्पादकः**

डॉ. नित्यानन्दः ओझा

सहायकाचार्यः– ज्योतिषविभागः

श्रीसोमनाथसंस्कृतविश्वविद्यालयः वेरावलम्।

# वार्षिकप्रतिवेदनम्

२०१८-१९ तमे शैक्षणिकवर्षे वाक्यार्थपरिषदि विद्वद्भिः विश्वविद्यालयाध्यापकैः प्रस्तुतानां वाक्यार्थानां विवरणं सम्प्रत्यत्र प्रस्तूयते।

| दिनाङ्कः | वक्ता | | विषयः |
|---|---|---|---|
| ऑगस्ट २०१८ | १ | डॉ. महेन्द्रकुमार अं. दवे (अध्यक्षः) | महाकविकालिदासस्य रूपकेषु रसनिरूपणम् |
| | २ | डॉ. नित्यानन्दः ओझा | ग्रहणविमर्शः |
| | ३ | ડૉ. જયેશકુમાર ડી. મુંગરા | જો કિડની સ્વસ્થ, તો શરીર સ્વસ્થ |
| सप्टेम्बर २०१८ | १ | प्रो. अर्चना दुबे (अध्यक्षा) | उत्तमरामचरिते स्त्रीधर्मः |
| | २ | डॉ. शत्रुघ्नपाणिग्राही | धर्ममूलं वेदः |
| | ३ | कु. दृष्टि बारैया | पाचनतन्त्र मा योग |
| | ४ | कु. धरमकचोटः | अन्तः स्रावग्रन्थि |
| ऑक्टोबर २०१८ | १ | डॉ. नरेन्द्रकुमार पण्ड्या (अध्यक्षः) | सौगन्धिकाहरणव्यायोगस्य विमर्शः |
| | २ | डॉ. पङ्कजकुमार एस्. रावलः | श्रीधरीटीकानुसारेण श्रीमद्भागवतमहापुराणे प्रथमस्कन्धे प्रोक्त भीष्मस्तुतिः |
| | ३ | Ravindra S. Kale | Plagiarism and UGC: An Introduction |
| नवेम्बर २०१८ | १ | प्रो. (डॉ.) विनोद कुमार झा (अध्यक्षः) | "यासुँट् परस्मैपदेषूदात्तो ङिच्च" सूत्रे ङिद्ग्रहणं किमर्थम् ? |

| | | | |
|---|---|---|---|
| | २ | Dr. Kartik Pandya | An Essence of Ethical Knowledge in the *Bhagavad Gītā* |
| | ३ | डॉ. डायालालः मोकरिया | वाल्मीकिरामायणे हनुमतः व्यक्तित्वम् |
| फरवरी २०१९ | १ | प्रो. देवेन्द्रनाथ-पाण्डेयः (अध्यक्षः) | संस्कृतं प्रति पाश्चात्यविदुषामनुरागः |
| | २ | डॉ. जानकीशरण-आचार्यः | भूमाधिकरणविचारः |
| | ३ | डॉ. मनीषा काळे | अप्रवासी भारतीयों की व्यथा कथा |
| | ४ | श्री राजकिशोर ओझा | PUSHYAMITRA: THE CHAMPION OF BRAHAMANISM |
| फरवरी २०१९ (द्वितीयसत्रम्) | १ | डॉ. दीपेश विनोद कतिरा (अध्यक्षः) | संस्कृते आदरसूचनपद्धतिः |
| | २ | श्री भीखाभाई सोलंकी | जयदेवनो नरसिंहमेहता पर प्रभाव |
| | ३ | श्रीजिगर भट्टः | रसगङ्गाधरे उत्तमोत्तमकाव्यस्य उदाहरणे व्यङ्ग्यविमर्शः |
| मार्च २०१९ | १ | प्रो. गोपबन्धु मिश्रः (अध्यक्षः) | अध्यक्षीयमुद्बोधनम् |
| | २ | डॉ. रमेशचन्द्रशुक्लः | ज्योतिषशास्त्रे दर्शनानां प्रभावः |
| | ३ | डॉ. बी. उमामहेश्वरी | उपनिषत्सु ब्रह्मानन्दयोर्विचारः |

एवं २०१८-१९ तमे शैक्षणिकसत्रे कुलपतिनामाशीर्भिः प्राध्यापकानां च सहयोगेन अष्टौ अधिवेशनानि निर्विघ्नतया अनुष्ठिय वाक्यार्थपरिषदियं सुसम्पन्ना इति सर्वेभ्यो धन्यवादान् समर्पयावः।

## विषयानुक्रमणिका

# संस्कृतं प्रति पाश्चात्यविदुषामनुरागः

**प्रो. देवेन्द्रनाथपाण्डेयः**

आचार्यचरः, वेदविभागः,

श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्

यद्यप्यैतत्प्रमाणसाध्यन्नास्ति वक्तुं यत् वैदेशिकानां संस्कृतं प्रति रुचिः कथं कदा च जागृता अजायत, यतोहि वैदेशिकानां संस्कृतभाषा-साहित्यसंदोहं प्रत्यभिरूचिः कालक्रमानुसारमावश्यकतानुसारञ्चाजायत। प्रकरणविमर्शोयं त्रिधा प्रवाहयितुमुपयुज्यते-

(1) कार्गदाविष्कारपुरस्सरं संस्कृतहस्तलिखितग्रन्थानां प्रणनयनसंस्कृति-कालविमर्शः।

(2) हस्तलिखितग्रन्थानां संग्रङ्गहः, तत्परिशीलनञ्च।

(3) हस्तलिखितग्रन्थान्प्रति भारतीयपाश्चात्यविदुषामाकर्षणम् क्रमिको-विकासश्च। शोधपत्रमिदमतिसंक्षिप्तरूपेणोपर्युक्तान् सर्वान् विषयान् व्यवस्थितसूचनायै विश्लेषयिष्यति। तेन विश्लेषणेन सह पाश्चात्यविदुषां संस्कृताध्ययनं प्रत्यनुरागाविर्भावकालावधेः यथासाध्यमेकं परिशीलनमपि प्रतिपादयिष्यते शोधव्याख्यानप्रधानेस्मिँल्लेखे। तत्सन्दर्भ एव तेषां पाश्चात्यविदुषामभिरुचिप्रसूतानि च कार्याणि प्रस्तोष्यन्ते।

कार्गदाविष्करणम्, हस्तलिपिरचनाकार्यञ्च-

अत्रैतदुल्लेखनीयमस्ति यच्चीनदेशे मन्ये, 1056 ख्रीष्टाब्दे कार्गदोत्पादनव्यवसायस्य प्रारम्भो बभूव। परन्तु तस्य निर्यातव्यवसायः कदाजात आसीदिति निश्चितं न भवति, संस्कृतसाहित्यपरिशीलनेन।

तदर्थन्त्वन्याधुनिकार्थशास्त्रादीनामैतिह्यमध्येयमस्ति। संभवतः तत्काल-समीप एवास्माकं भारतवर्षेपि कार्गदोत्पादनकार्यमभविष्यत्। अस्य वर्णनं हस्तलिखितग्रन्थानां वृत्तान्तावगमनायावश्यकमस्तीति विषयः समुपस्थापितः।

भारतीयविचारकाणामनुसारन्तु तिस्रः स्थितयः समक्षमायाति

प्राचीनविद्याध्ययनाध्यापनसंबद्धाः अधोलिखितानुसारम्-

अतिप्राचीनकाले तु विद्याध्ययनस्य मौखिक्येव परम्परा प्रचलिता आसीत् गुरुकुलपरम्परानुसारम्। गुरुकुलपरम्परानुसारम्।

ततश्च मानवबुद्धिह्रासकारणात् वैकल्पिकव्यवस्थासन्दर्भे चिन्तनं यदा तदा तात्कालिकप्रचलितभारतीयलिपिषु ग्रंथानां रचना जायमाना आसील्लोके। यद्यपि अभिज्ञानशाकुन्तलकुमारसंभवनैषधदादिग्रन्थानां परिशीलनपरिणति-कारणादिङ्गितमेतद्भवति यदस्माकमार्यावर्ते संस्कृत-काव्यादिसाहित्यविधानां रचना प्रारब्धा जाता आसीदितः पूर्वमेव परन्तु गभीरशोधफलश्रुतिः विदुषां संकेतयति यत् त्रयोदश-चतुर्दशशताब्योरेव हस्तलिखितग्रन्थानां प्रायशः (1) प्राप्तिर्भवति, येनैतज्ज्ञायते यद्ग्रन्थानां रचना ततो नातिप्राचीना भवितुमर्हतीति। हस्तलिखितग्रन्थस्तालपत्र-भूर्जपत्रादिषूपलभ्यन् - त इत्यत्र विषयविस्तार-भयान्नाधिकं विश्लेष्यते पाण्डुलिपिविषयविशेषाच्च। यत्किमपि स्यात् परन्त्वेतदत्रावधेयमस्ति यत् वैदेशिकानामाक्रमणकारणात् यद्यपि बह्व्यः पाण्डुलिपयः मूलहस्तलिखितग्रन्थाश्च नष्टा अपहृताश्च परैर्जाताः। तद्विपत्तिविषविनष्टेष्वपि हस्तलिखितग्रन्थेषु,पाण्डुलिपीनां संख्या, इदानी-मप्यधिकास्तिसंस्कृतविद्याध्यवसायव्यवसायव्यापृतानां विदुषामतिशय-प्रयत्नवशात्। अद्य हृष्यत्यस्माकमन्तःकरणमवलोक्यैतल्लक्षाधिक-संख्यासंवलितं-हस्तलिखितग्रंथालङ्कृतञ्च सरस्वतीभवनादि (2) ग्रंथागारम्। ता अनिर्वचनीया-र्षप्रज्ञाप्रसूतप्रतिलिपीः मूलप्रतीश्च संस्कृतहस्तलिखित-ग्रन्थानाम् विभाव्य, गवेषणकर्मनिष्ठाःपूर्वपाश्चात्यप्रज्ञामूर्तयो विद्वांसः तदध्येतुमाकृष्टाः संबभूवुः (3)। ततः प्रभृतिरेवैषा परम्परा पाश्चात्यसंस्कृतविदुषां संस्कृतभाषासाहित्या-ध्ययनस्य प्रचलन्ती विद्यते। अनवरतम् ते अस्मिन् संस्कृतभाषासाहित्यक्षेत्रे शोधकर्माणि कुर्वन्तः दृश्यन्ते, यत्सुखमातनोत्यस्मासु।

अत्र तस्मिन्नेव सन्दर्भे, केषाञ्चिद्विदुषां संस्कृतभाषासाहित्यं प्रति महद्योगदानं विवर्णयिषति शोधपत्रवाचकः लेखकश्चास्य शोधपत्रस्य। विस्तृतविचारप्रस्तावपूर्वमत्र जर्मनदेशीयविदुषो मैक्समूलरमहोदयस्य भारतीयसाहित्यं संस्कृत-भाषासाहित्यञ्च प्रति सहजोद्गारः प्रस्तूयते, अधस्ताद्

यत्कारणात् संस्कृतस्यानिर्वचनीयं वैज्ञानिकत्त्वं विश्वजनस्वीकार्यत्त्वञ्चा-भिव्यज्यते, तथा च तन्माध्यमेन पाश्चात्य संस्कृतविदुषां संस्कृतं प्रति श्रद्धापि परिलक्ष्यते जनैः। यथा - (स्वकीये ग्रंथे स कथयति)।

“सम्पूर्णेऽस्मिन् संसारे ज्ञानिनां पण्डितानाञ्च देशः भारतमेवास्ति यत्रविपुलज्ञानसंपदा हस्तलिखितपुस्तकेषु सुरक्षिता तिष्ठति (4) तथैव विन्टरनित्सोपि कथयति- “वास्तविकरूपेण वैदिकी भाषा एवं चैषा इन्डोइरानियनमूलभाषा पारस्परिकसमानतामावहतः(5)” एतदत्रास्ति सूचनीयं यत् हस्तलिखितग्रंथसम्पदामारक्षितुमेकत्र व्यवस्थितरुपेण 1784 ख्रीष्टाब्दे एशियाटिक- सोसायटीत्यस्य स्थापना बभूव (6) तन्माध्यमेनैव संस्कृतहस्तलिखितग्रंथानां गवेषणाकार्यमारभत स्वदेशे विदेशेषु च व्यवस्थितरूपेण। ततश्च सर विलियमजोन्स महोदयः एशियाटिक सोसायटीत्यस्यालोके संस्कृतग्रन्थसंग्रहसस्यैकं भागं 1807 वर्षे प्रकाशमनयत्। तस्मिन्नेव वर्षे हेनरी टामसकोलब्रुकः एशियाटिक सोसायटीतिसंस्थायाः सभापतिर्बभूव। ततः प्रभृतिरेव बहवो हस्तलिखितग्रंथाः संकलिताः जाताः (7)। अस्मिन् पुण्ये कर्मणि व्यापृताः पूर्वपाश्चात्यविद्वांसः संस्कृतस्य, रायल एशियाटिकसोसायटीमाध्यमेन 1837- 1934- वर्षेषु संस्कृतग्रंथराशेः आदिमसप्तभागानां संस्कृतग्रंथसंग्रहं प्रकाशितवन्तः (द्र. संस्कृतसाहित्य का इतिहास पृ. 20-27, वा. गैरोला)

तत्पश्चात्डा. बूलरः (1837-1898) पेरिस-आक्सफोर्ड-लन्दनस्थ-संस्कृतपुस्तकानां परिशीलनञ्चकार, तथा च मैक्समूलर महोदयस्य सत्प्रेरणया बम्बई सीरीज इति ग्रन्थमालायाः सर्वप्रथमं प्रकाशनञ्चकार। भारतमागत्य तथैव डॉ. बेबरः (1825-1901) बर्लिन इतिनगरस्य राजकीयपुस्तकालये, संग्रहीत संस्कृतपुस्तकानां तथा च ब्हूलर महोदयेन प्रेषितानां 500 - जैनग्रन्थानाम् अनुशीलनं विधाय तद्विवरणं प्रकाशितवान्।

अनेनैव प्रकारेणास्मिन्विधौ भण्डारकर महोदयः, कीलहार्नः, पीटर्सनः, जोसिल बेंडालः, राइस डेविड्सः, विन्टरनित्ज-प्रभृतयश्चान्ये विद्वांसः व्यापृताः सन्तःसंस्कृहस्तलिखितग्रन्थानामुद्धारकार्याण्यनुष्ठितवन्तः।

संक्षिप्तरूपेणत्वेतदेवास्त्याधारस्तंभः पाश्चात्यविदुषां संस्कृतभाषासाहित्या-ध्ययनाध्यापनं प्रत्यभिरुचेः। तत्रविकासक्रमोग्रे निरूप्यते - एतदत्रावधेयमस्ति यत् ब्रिटिशशासनात् पूर्वस्मिन् काले, मुगलसाम्राज्ये संस्कृतभाषा-साहित्याध्ययनाध्यापनयोः नासीत् सुव्यवस्था भारते वर्षे। यद्यपि ब्रिटिशसर्वकारस्य कार्यकालावधावपि पाश्चात्यानामभिरुचिः श्रद्धया आसीत् संस्कृताध्ययनं प्रत्येदन्न वक्तुं शक्यते प्रत्युत् दीर्घकालं यावत् निर्विघ्नं भारतवर्षशासनं निर्वोढुं प्रकल्पितसाधनेष्वन्यतमसाधनरूपेण संस्कृत-शास्त्राणाम्अध्ययनं ब्रिटिशशासनाधिकारिभिः विहितम्। कालान्तरे एतदध्ययनं पाश्चात्यभूमौ प्रासरद् येनास्य संस्कृतभाषासाहित्यस्य व्यापकं स्वरूपमुपचीयमानं बभूव तत्र मुख्यनाम वर्तते वारेन हेस्टिंग्स (Warren Hastings ) महोदयस्य यो हि जनः इस्ट इन्डिया कम्पनी(East India Company)माध्यमेन भारतवर्षे ब्रिटिशशासनं स्थापयामास (द्र. A History of Indian Literature page number- 8, by Maurice Winternitz) ऐतिहासिक विवरणानुसारं वारेन हेस्टिंग्सः 1773- वर्षे, गवर्नर जनरलरूपेण (Governor General) बंग-प्रदेशे नियुक्तो जात आसीत्। विधिविषयककाठिन्यं न्यायालये अवलोक्य पण्डितानाङ्कृते वादनिर्णयसहायप्रमुखान् धर्मशास्त्रीयान्ग्रन्थान् स निर्मितवान्। तत्र च ब्राह्माणान् कुशलान् विदधे। ततःप्रभृतिरेवात्र विषये काचिज्जागृतिरागता।

ततश्च तेषां संस्कृतशास्त्रीयसंकलितग्रन्थानाम् आङ्ग्लभाषायामनुवादस्या-वश्यकता आसीत्। तत्र नथेनियल-ब्राशी हालहेड : (NATHANIEL BRASSEY HALHED) तद्ग्रंथमनूदितवान्। ए कोड आफ जेन्टू ला (A CODE OF GENTOO LAW) नाम्ना अयं ग्रन्थः (8) 1770 वर्षे प्रकाशितो बभूव। एतदत्रास्ति सूचनीयं यदाङ्ग्लविद्वत्सु सर्वप्रथमो विद्वान् संस्कृतस्यासीत्- चार्ल्सविल्किन्स- महोदयः (Charles Wilkins) (9) यो हि वारेन हेस्टिंग्स - प्रेरणया काश्याः पाण्डित्यपरम्परासाहाय्येन 1785 वर्षे श्रीमद्भगवद्गीतायाः आङ्ग्लभाषायामुवादं कृतवान्। ततश्च क्रमेण हितोपदेशः

(1795 वर्षे) महाभारताधारेण शकुन्तलोपाख्यानम्, संस्कृत-व्याकरणम्, भारतीयशिलालेखादयश्च ग्रन्थाः क्रमेणाङ्ग्लभाषायां तस्य महोदयस्य प्रकाशमागताः।

अस्मिन्नेव क्रमे,आङ्ग्लदेशीयः परमयशस्वी संस्कृतविद्वान् (10) विलियमजोन्सः (William Jones-1746-1794 जीवनावधिः) भारतवर्षे आजगाम न्यायाधीशो भूत्वा, यो ह्यत्रागमनात्पूर्वमपि प्राच्यसाहित्यं किञ्चित्, अन्यभाषामाश्रित्याधीतवान् आसीत्, तथा च विशेषरूपेण अरबी-परसीयनभाषासाहित्ये आङ्ग्लभाषायामनूदितवान् आसीत्। अत्रागमनानन्तरं संस्कृतमप्यतिकाठिन्येन(11) धैर्येण च सह बंगप्रदेशसस्थाद्विदुषः अधीतवान् आसीत्। स एव 1783 वर्षे आगमनानन्तरं 1784 वर्षे वङ्गप्रदशे एशियाटिक सोसायटीत्यस्यसंस्थापनञ्चकार यतः 1779 वर्षे कालिदासस्य प्रसिद्धं नाटकम् - अभिज्ञानशाकुन्तलम् आङ्ग्भाषानुवादेन सहप्रकाशितं वभूव। एतत्पुनः विलियमजोन्सानूदितमभिज्ञानशाकुन्तलम्, 1792 वर्षे जर्मनभाषायाम् जोर्ज फोर्सटर (George Forster) महोदयेनानूदितम्, (12) यस्य पाश्चात्यदेशे बृहत्प्रचारो बभूव। तथैव जोन्स महोदयः 1792 वर्षे कालिदासस्य ऋतुसंहारम् संस्कृते प्रकाशितवान् आसीत्। एतदेवासीत् प्रथमं मुद्रणं संस्कृतभाषायामितिमन्यते। अस्मिन्नेव क्रमे एतदप्युल्लेखनीयमस्ति यत् सप्तदशवर्षदेशीयः हेनरी थोमस कोलब्रूक (Henry Thomas Colebrooke) महोदयः यो हि 1782 वर्षे कलिकत्ता-नगरे सर्वकारसेवायां नियुक्तो जात आसीत्, परन्तु पूर्व स नासीदुत्सुकः संस्कृतं प्रति, तथापि 1794 तमे वर्षे सर विलियम जोन्स महोदयस्य मृत्योः पश्चात् (13) संस्कृतं सम्यक् पठित्वा संस्कृतकार्यक्षेत्रे बहु यशो लेभे। अनेन प्रकारेण विलियम जोंस महोदयेन कृतान्यनुवादकार्याणि संस्कृतसाहित्यस्य (विशेषरूपेण, मनुस्मृत्य-भिज्ञानशाकुन्तलयोः) जर्मनदेशीयविदुषामप्याकर्षणभूमिरभवत्। यद्यपि जर्मनदेशीयसंस्कृत-विदुषामस्त्येका बृहन्नामश्रृंखला तथापि मैक्समूलर - श्लेगलप्रभृतयः केचन विद्वांसः अत्यन्तमेव श्रद्धया स्मरणीयाः सन्ति येषां

योगदानं संस्कृतभाषासाहित्यं प्रत्युल्लेखनीयमस्ति। अस्मिन्नेव सन्दर्भे मैक्समूलरमहोदयविषये सामान्यो विचारः प्रस्तूयते-

सामान्यः परिचयः- अस्य मैक्समूलरमहोदयस्य पूर्णं नाम आसीत्- फ्रेडरिक मैक्समूलरः भारतीयाः संस्कृतज्ञाः तं महानुभावं श्रद्धया वेदोद्धारकारणात् मोक्षमूलर इति व्याहरन्ति। यद्यपि केचनात्र विमतमप्यादधति, तथापि प्राच्यविद्याध्ययनकारणात् तदर्थञ्च विपदाग्रस्तं तस्य जीवनवृत्तान्तं शारीरिकञ्च क्लेशानुभूतिमुपश्रुत्य कस्य सहृदयजनस्य हृदयं करुणार्द्र न भविष्यति? तस्य महानुभावस्य पूर्णो वृत्तान्तो नोपस्थाप्यते, प्रपंचप्रसरभयाद् विषयान्तरवर्णनदोषाक्षेपभयाच्च।

तस्य मैक्स-महोदयस्य जनिरजायत जर्मनदेशीय डेसाऊ (Dessau) नगरे (14) दिसम्बरमासस्य षट्- तारिकायाम् 1823 ई.वर्षे तस्य पितुर्नाम आसीत्- वेलहेममूलरः (Welhelm Mueller) (15) स अप्यासीत्साहित्यरचनाप्रियः। मैक्समूलरमहोदयः लिपजिंगविश्वविद्यालया-द्दर्शनभाषाविज्ञानविषयोः अध्ययनं कृतवान् आसीत्। कालान्तरे स हरमान ब्रोखाउसमहोदयप्रेरणया (16) संस्कृतमधीतवान् आसीत्। तदनन्तरं बर्नूफ महोदयस्य ऋग्वेदीयं व्याख्यानम् हृदयनिहितम् कृत्वा स अनुभूतवान् यन्ममकृते कश्चिन्नूतनः संसारः पुरस्कृतोस्तीति (17)। अत कालान्तरे स प्रकाशितवान् ऋग्वेदं (सायणभाष्यसहितम्) प्रकाशितवान् स्वकीयायुषः षड्विंशतिवर्ष एव (1849 ई. वर्षे) कृतवान्।तदतिरिच्य बहून्यन्यान्यपि पुस्तकानि अनेन महानुभावेन रचितानि, यस्य विवरणमत्र न दीयते। तदर्थं हिन्दीभाषायां रामचन्द्रमालवीयरचितम् मया चानूदितं (संस्कृतस्य विद्वांसः पण्डिताश्च- इति तस्य नाम) संस्कृतभाषायामेकदा प्रेक्षणीयमस्ति।(18)।

श्लेगलभ्रातरौ (19)

अश्विनौवदास्ताम् श्लेगलभ्रातरावपि जर्मनदेशीयौ। तयोर्ज्येष्ठः आसीत् अगस्ट विलहेम फान श्लेगलः। तयोः द्वयोः जन्म तु जातमासीत् हन्नोवर नगरे। अग्रजश्लेगलस्य जन्म समयो मन्यते 1767 ई.वर्षे तथा चानुजस्य जन्म कालो मन्यते 1772 वर्षे। अगस्ट फानश्लेगलः (20) पेरिशोद्देशे फ्रेंज बाप

(Frenz-Bopp) प्रेरितः संस्कृतभाषासाहित्यमधीतवान्। ततश्चानुजः फ्रेडरिक श्लेगलः 1802 ई. वर्षे (21) पेरिसं गत्वा वर्षवयं यावत् संस्कृतमधीतवान्। तत्र च गत्वा स्वकीयमुद्गारं स्वाग्रजं प्रति लिखन् ब्रूते-यद् अहं परसियनभाषाध्ययनोद्देश्यं प्राप्तवानस्मि, तथा चाग्रे मन्ये चतुर्मासाभ्यन्तर एव अभिज्ञानशाकुन्लमप्यध्येतुं (मूलसंस्कते) क्षमो भविष्यामि इति। संस्कृतस्य प्रशंसां कुर्वन्नयं कथयति यत् संस्कृतसाहित्यं मानवमस्तिष्काध्ययनं प्रति मानवान् प्रेरयति। तथैवास्याग्रजः अगस्ट विलहेम फान श्लेगलोपि सर्वप्रथमं श्रीमद्भगवद्गीतायाः लेटिन भाषायाम् अनुवादं कृत्वा 1829 ई.वर्षे प्रकाशितवान्। वाल्मीकि रामायणस्यादितः काण्डद्वयञ्च लेटिन भाषायामेवानूद्य 1838 ई.वर्षे प्रकाशितवान्। अत्रैतदुल्लेखनीयमस्ति यत् यद्यपि जर्मन-देशीयसंस्कृतविदुषां संख्या अधिकास्ति, येषां वर्णनमग्रे, प्राप्ते काले, विधास्यामि। अत्र तु केवलं पाश्चात्यसंस्कृतविदुषां प्रतिनिधित्वं दर्शयितुमुपर्युक्तविदुषां विषये संक्षिप्तं विवरणमुपस्थापितमस्त्यत्र मया। तान् विहाय अन्येपि रूस-फ्रांस-अमेरिकादिदेशवास्तव्याः विद्वांसः संस्कृतक्षेत्रे कार्यं कृतवन्तः सन्ति येषां विषये अस्माभिर्ज्ञातव्यमस्ति। अत्र विस्तर-भयान्नोपस्थाप्यते अस्मिन् सीमिते शोधपत्रे।

## संदर्भ-संचयः

(1) सबसे प्राचीन उत्कीर्ण लेख तो बौद्ध सम्राट्- अशोक द्वारा लिखावाये हुये ईसा पूर्व तीसरी शताब्दी के मध्य काल के स्तम्भलेख और शिलालेख हैं। द्र. संस्कृत साहित्य का इतिहास - ए. ए मैक्डानल, पृ. 12, 13, चौखम्बाविद्याभवन, प्रकशन वर्ष 1962

(2) द्र सरस्वती भवन, सम्पूर्णानन्दसंस्कृतविश्वविद्यालय, वाराणसी। (3) द्र. संस्कृत साहित्य का इतिहास, वाचस्पति गैरोला, पृ. 18-19, चो. विद्या भवन, 1917 (पंचमसंस्करण)

विद्वान् मैक्समूलर (1823-1900) ने अपनी पुस्तक भारत से हम क्या शिक्षा ले सकते हैं, में एक जगह कहा है कि सारे संसार में ज्ञानियों एवं पण्डितों का देश भारत ही एकमात्र ऐसा है, जहां कि विपुल ज्ञानसंपदा हस्त लिखित

पोथियों के रूप में सुरक्षित है। वाचस्पति- गैरोला, संस्कृत साहित्य का इतिहास पृ. 20

(5) Indeed the language of the *VEDA* and this Indo-Iranian basic language seem to be closer to each other than the Indian languages, Sanskrit and Pali, page 35, A History of Indian literature-by Maurice Winternitz, M.B.D. Publication Reprint from Delhi- 1996.

(6) द्र. पृ 26, संस्कृत साहित्य का इति वाच. गैरोला

(7) इस प्रतिष्ठान के द्वारा एक ओर तो संस्कृत की बहुमूल्य हस्तलिखित पोथियों का उद्धार हुआ और दूसरी ओर भारत में संस्कृत के अनुसन्धान सम्बन्धी कार्य का आरम्भ हुआ- पृ. 26. संस्कृत साहित्य का इतिहास- वाच. गैरोला

(8) When the book was completed there was nobody who could translate it directly from Sanskrit in to English. So it had to be translated first into Persian from which it was translated into English by Nathaniel Brassey Halhed. The translation was printed with tittle- A code of Gentoo Law- A GERMAN translation appeared in Hamburg in 1778. "Gentoo" is the Anglo Indian form of the Portuguese 'gentio' and is used to denote the Indian 'heathens' i.e. the Hindus in contradistinction to the Mohammadans- see- page -8, (foot note)- A History of Indian literature by Maurice Winternitz.

(9) The first English man to acquire a knowledge of Sanskrit was Charles Wilkins, who had been encouraged by Warren Hastings to take lesions from

the Pandits in Banaras- the centre of Indian Scholarship- page 9, A History of Indian Literature, by Winternitz.

(10) William Jones was not only a learned and enthusiastic orientalist, but also the first Anglo-Indian poet. He composed suggestive hymns to Brahman, Narayan, Laxmi etc. See page 9- A History of Indian literature, by winternitz.

(11) द्र. संस्कृतस्य विद्वांसः पण्डिताश्च ( रामचन्द्र मालवीय हिन्दी) संस्कृतानुवाद-प्रो. देवेन्द्र नाथ पाण्डेय प्रकाशन श्री सोमनाथ संस्कृत विश्वविद्यालय- वेरावल गुजरात- पृ -113

(12) See page 10, A History of Indian Literature, by winternitz.

(13) Do.

(14) 'Dessau' see page 61, German Indologists by Valentina Stache- Rosen 2nd Revised Edition by Agnes stache weiske- Dialogue-publication of the Maxmueller Bhavan in India (1990).

(15)Wilhem Mueller (1794-1827) was librarian, whose lyrics were well known at thetime. See German Indologists.

(16) Names are - Harmann brochaus, E. Burnouf.

(17)A new world was opened up to me- see German Indologists - page 61. (18) see page -7, German Indologists. find it as Hannover)the place name.

(19)August Wilhem Von Schlegel(1767-1845) and Fredrich Schlegel (1772- 1829), German-

(20) I not only improved my knowledge of Persian, but I have reached the great goal of being sure of Sanskrit. Within four months will be able to read Sakuntalam, although I will still have to make use of the Translation. Page - 9, GERMAN Indologists.
(21) Do.



## ''यासुँट् परस्मैपदेषूदात्तो ङिच्च" सूत्रे ङिद्ग्रहणं किमर्थम्?''

**प्रो. (डॉ.) विनोद कुमार झा**

अध्यक्षः, व्याकरणविभागः,

श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्

**सूत्रार्थः- "यासुँट् परस्मैपदेषूदात्तो ङिच्च"**[१] सूत्रमिदं यासुँडागमम् उदात्त-स्वरम् तथा च ङितं करोति। प्रकृते सूत्रेऽस्मिन् पञ्च पदानि सन्ति। **1.** यासुट्- 1/1, **2.** परस्मैपदेषु- 7/3, **3.** उदात्तः- 1/1, **4.** ङित्- 1/1, **5.** च- अव्यय पदम्। **परस्मैपदेषूदात्तः**= परस्मैपदेषु+उदात्तः (**"अकः सवर्णे दीर्घः"**[२]- उ+उ<ऊ)। **उदात्तो ङित्**= उदात्तस्[पद]+ङित् (**"ससजुषो रुँः"**[३]- स्<रु, **"उपदेशेऽजनुनासिक इत्"**[४] तथा **"तस्य लोपः"**[५]- रुँ<र्, **"हशि च"**[६]- र्<उ, **"आद्गुणः"**[७]- अ+उ<ओ)। **ङिच्च**= ङित्+च (**"स्तो श्चुना श्चुः"**[८]- त्<च्)। **"लिँङः सीयुट्"**[९] सूत्राद् लिँङः- 6/1 पदस्य अनुवृत्तिरागच्छति। **परस्मैपदेषु** इत्यत्र षष्ठ्यर्थे सप्तमी विभक्तिर्वर्तते। अत एव वृत्तिभागे लिख्यते- लिँङः परस्मैपदानां यासुडागमः स्यात् स चोदात्तो ङिच्च। अर्थात् अनेन सूत्रेण लिँङ्-लकारस्य स्थाने विहितानां परस्मैपदसंज्ञकानां प्रत्ययानां यासुँडागमो भवति तथा च स आगम उदात्तो भवति ङिच्च।

**यासुँडागमः-** अयं यासुँडागमः सीयुँडागमस्य अपवादो विद्यते। यासुँटि टकार इत्संज्ञकः तथा उकार उच्चारणार्थको विद्यते। उच्चारणार्थकस्य वर्णस्य विषये

---

[१] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 3/4/103*

[२] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 6/1/101*

[३] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 8/2/66*

[४] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 1/3/2*

[५] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 1/3/9*

[६] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 6/1/114*

[७] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 6/1/87*

[८] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 8/4/40*

[९] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 3/4/102*

पक्षद्वयं वर्तते। तत्र प्रथमः पक्षः- उच्चारणार्थकस्य वर्णस्य इत्संज्ञालोपाभ्याम् अपहारो भवति। द्वितीयः पक्षः- उच्चारणार्थकस्य वर्णस्य इत्संज्ञालोपाभ्यां विनैव अपहारो भवति, उच्चारणार्थकत्वात्। यासुँडागमस्य टित्त्वाद् अयं यासुँडागमः **"आद्यन्तौ टकितौ"**[१०] सूत्रस्य नियमानुरोधेन तिबादीनाम् आद्यवयवो भूत्वा उपस्थितो भवति। **"यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते"**[११] इति परिभाषानुसारं यासुँडागमः तिबादीनां प्रत्ययानां गुणैः गुणीभूतो भवति। अर्थात् तिबादिप्रत्ययगता गुणादयः यासुँटि अपि तिष्ठन्ति। यासुँडागमे ङित्त्वस्य आनर्थक्याद् ङित्त्वम् **'आनर्थक्यात्तदङ्गेषु'** इति न्यायेन समुदाये आगमविशिष्टतिबादौ विश्राम्यति। **'आगमा अनुदात्ताः'** (आगमा अनुदात्ता भवन्ति) इति यासुँटोऽनुदात्तत्वे प्राप्ते प्रकृतसूत्रेण उदात्तवचनं क्रियते। इदमेव उदात्तवचनम् **'आगमा अनुदात्ताः'**[१२] इत्यत्र ज्ञापकमिति भाष्यम्[१३]। यासुँटो ङित्त्वकरणम् 'स्तुयात्', 'स्तुयाताम्' इत्यादौ **"क्ङिति च"**[१४] सूत्रेण गुणादिनिषेधार्थं विद्यते।

**प्रश्नः-** अत्र केचन आचार्याः शंकां कुर्वन्ति यत् 'लिँङ्' लकारस्तु स्वतो ङिद् वर्तते, अतः अस्य स्थाने जायमानाः तिबादिप्रत्यया अपि **"स्थानिवदादेशोऽनल्विधौ"**[१५] सूत्रेण स्थानिवद्भावेन ङिदो भविष्यन्ति तथा च 'यासुँट्' आगमः तिबादिप्रत्ययान् अभिलक्ष्यैव क्रियते, तस्मात् **"यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते"** (य आगमो यम् उद्दिश्य क्रियते, स आगमः तस्य उद्देश्यस्य (आगमिनः= आगम- युक्तस्य) गुणेन गुणीभूतो भवति

---

१० *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 1/1/46*

११ *आचार्यविश्वनाथशास्त्रिणः सुबोधिनी हिन्दीटीकोपेते परिभाषेन्दुशेखरे, परिभाषासंख्या-11*

१२ *'भैमी' व्याख्यासहितायां लघुसिद्धान्तकौमुद्यां द्वितीयभागे पृष्ठ-संख्या- 66 (यासुट् उदात्तवचनाद् विज्ञायते **'आगमा अनुदात्ता भवन्ती'ति।** अन्यथा यासुटः प्रत्ययभक्तत्वात् प्रत्ययस्वरेणैव सिद्धमुदात्तत्वम्। नैतदस्ति ज्ञापकम्। यानि पिद्वचनानि तदर्थमेतत् स्यात्। यद्येतावत् प्रयोजनम् अपिदित्येव ब्रूयात्। तदेतदुदात्तवचनं ज्ञापकमेव आगमा अनुदात्ता भवन्तीति'- **पदमञ्जरी।**)*

१३ *प्रकृतसूत्रस्य बालमनोरमायां टीकायाम्।*

१४ *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 1/1/5*

१५ *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 1/1/56*

अर्थात् आगमः तस्य उद्देश्यस्य (आगमिनः= आगमयुक्तस्य) अवयवः (अंशः) भवति, अतः आगम- विशिष्टस्य आगमिना ग्रहणं क्रियते।) परिभाषया 'यासुँट्' आगमो ङिद् भविष्यति। एवम्प्रकारेण यासुँडागमस्य परम्परया ङित्त्वसम्पादनसम्भवात् तस्य ङिद्वचनद्वारा ङित्करणं व्यर्थमस्ति?

**आन्तरिकः प्रश्नः-** अत्र एका शंका समुदेति यत् 'लिँङ्' यद्यपि स्वतो ङिद् विद्यते तथापि तिबादिप्रत्ययानां स्थानिभूते लिङ्-लकारे ङकारस्य अल्त्वेन, अल्विधौ स्थानिवद्भावस्य निषेधात् **"स्थानिवदादेशोऽनल्विधौ"** सूत्रेण स्थानिवद्भावो न सम्भवति। अत्र स्थानिनो लिँङोऽल्भूतस्य इत्संज्ञकस्य ङकारस्य गुणनिषेधविधावाश्रयणेन सिद्धमस्ति अत्र अल्विधित्वम्। अस्यां परिस्थितौ तिबादिप्रत्ययानां ङित्त्वाभावात् कथं **"यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते"** परिभाषया 'यासुँट्' आगमो ङिद् भवितुं शक्नोति?

**उत्तरम्- "न ल्यपि"** इति निषेधसूत्रं व्यर्थीभूय ज्ञापयति यद् अनुबन्धकार्ये[१६] **अनल्विधौ**[१७] इति निषेधस्य प्रवृत्तिर्न भवति। अर्थात् अनुबन्धसम्बन्धिनि कार्ये कर्त्तव्ये सति अल्विधावपि **"स्थानिवदादेशोऽनल्विधौ"** सूत्रेण स्थानिवद्भावो भवति। स्थलस्यास्य स्पष्टीकरणम् एवम्प्रकारेण विद्यते - **"समानकर्तृकयोः पूर्वकाले"**[१८] सूत्रेण समानकर्त्तृकेषु धात्वर्थेषु पूर्वकाले विद्यमानाद् धात्वर्थात् **प्र**-उपसर्गपूर्वकाद् **दा**-धातोः त्त्वा-प्रत्यये, तत्र अनुबन्धलोपे, **प्र दा+त्वा** इत्यवस्थायाम् **"दाधाघ्वदाप्"**[१९] इत्यनेन **दा**-धातोः घु-संज्ञायाम्, **"कुगतिप्रादयः"**[२०] सूत्रेण प्रादिसमासे, **"अनेकाल्शित्सर्वस्य"**[२१] परिभाषा-

---

[१६] *इत्संज्ञायोग्यत्वम् इत्संज्ञकत्वं वा अनुबन्धत्वम्।*

[१७] *अला विधिरिति अल्विधिः, अलः विधिरिति अल्विधिः, अलः परस्य विधिरिति अल्विधिः, अलि विधिरिति अल्विधिः। न अल्विधिरिति अनल्विधिः, तस्मिन् अनल्विधौ।*

[१८] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 3/4/21*

[१९] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 1/1/20*

[२०] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 2/2/18*

[२१] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 1/1/55*

सूत्रस्य साहाय्येन **"समासेऽनञ्पूर्वे क्त्वो ल्यप्"**[२२] सूत्रेण नञ्भिन्ने प्रादिसमासे **'प्र'** इति अव्यये पूर्वपदे सति **दा**-धातोर्विहितस्य त्वा (क्त्वा) इत्यस्य स्थाने अनेकाल्त्वात् 'ल्यप्' सर्वादेशः। **प्र दा+ल्यप्** इत्यत्र अनुबन्धलोपे **प्र दा+य** इति दशायां **"स्थानिवदादेशोऽनल्विधौ"** सूत्रद्वारा स्थानिवद्भावेन यकारस्य कित्त्वात् **"घुमास्थागापाजहातिसां हलि"**[२३] सूत्रेण किति यकारे परे **दा**-धातोराकारस्य स्थाने ईत्वे प्राप्ते **"न ल्यपि"**[२४] सूत्रेण निषेधः क्रियते।

**"न ल्यपि" सूत्रस्य वैयर्थ्यम्, ज्ञापनम् आवश्यकत्वञ्च-** अत्र प्रश्नः समुदेति यत् 'क्त्वा' प्रत्ययः किद् विद्यते तस्य स्थाने विहितस्य 'ल्यप्' प्रत्ययस्य स्थानिभूते क्त्वा-प्रत्यये ककारस्य अल्त्वेन, तत्सम्बन्धिनि अल्विधौ ईत्वे स्थानिवद्भावस्य निषेधात् **"स्थानिवदादेशोऽनल्विधौ"** सूत्रेण स्थानिवद्भावो भवितुं न शक्नोति, यतोहि अत्र स्थानिनः क्त्वोऽल्भूतस्य ककारस्य आश्रयणेन अल्विधित्वमस्ति। अस्यां परिस्थितौ 'ल्यप्' प्रत्ययस्य कित्त्वाभावेन कित्परत्वाभावात् **"घुमास्थागापाजहातिसां हलि"** सूत्रेण किति यकारे परे **दा**-धातोराकारस्य स्थाने ईत्वस्य प्राप्तिरेव नास्ति, तर्हि तन्निषेधाय **"न ल्यपि"** निषेधसूत्रस्य का आवश्यकता? अतः **"न ल्यपि"** इति निषेधसूत्रं व्यर्थीभूय ज्ञापयति यत्- **अनुबन्धकार्ये कर्त्तव्ये अनल्विधाविति निषेधस्य प्रवृत्तिर्न भवति।** एवम्प्रकारेण अनुबन्धकार्ये कर्त्तव्ये **अनल्विधौ** इति निषेधस्य अप्रवृत्तौ स्थानिवद्भावेन 'क्त्वा' प्रत्ययस्थानिकस्य 'ल्यप्' प्रत्ययस्य कित्त्वात् **"घुमास्थागापाजहातिसां हलि"** सूत्रेण किति यकारे परे **दा**-धातोराकारस्य स्थाने प्राप्तस्य ईत्वस्य निषेधाय **"न ल्यपि"** इति सूत्रम् आवश्यकं भवति।

**पुनः प्रश्नः-** उपर्युक्तप्रकारेण अनुबन्धकार्ये कर्त्तव्ये **अनल्विधौ** इति निषेधस्य अप्रवृत्तौ पुनः शंका पूर्ववदवस्थितैव विद्यते यत् 'लिँङ्' लकारस्तु ङिद् वर्तते, तस्मात् तस्य स्थाने जायमानाः तिबादिप्रत्यया अपि **"स्थानिवदादेशोऽन-**

---

[२२] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 7/1/37*

[२३] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 6/4/66*

[२४] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 6/4/69*

**ल्विधौ"** सूत्रद्वारा स्थानिवद्भावेन ङिदो भवन्ति तथा च 'यासुँट्' आगमः तिबादिप्रत्ययान् अभिलक्ष्यैव विधीयते, अतः **"यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते"** इति परिभाषया 'यासुँट्' आगमः ङिद् भवति। एवम्प्रकारेण यासुँडागमस्य परम्परया ङित्त्वसम्पादनसम्भवात् तस्य ङिद्वचनद्वारा ङित्करणं व्यर्थमेव वर्तते?

**उत्तरम्- "यासुँट् परस्मैपदेषूदात्तो ङिच्च"** सूत्रेण यासुँडागमस्य ङिद्वचनद्वारा ङित्करणं व्यर्थीभूय ज्ञापयति- **ङित्त्वोक्तेर्ज्ञायते क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेध इति।**[२५] अर्थात् न सर्वत्र किन्तु कुत्रचिद् अनुबन्धकार्ये कर्त्तव्येऽपि अनल्विधाविति निषेधस्य प्रवृत्तिर्भवति। अतः प्रकृतस्थले **अनल्विधौ** इति निषेधस्य प्रवृत्तौ सत्यां परम्परया उपर्युक्तप्रकारेण यासुँडागमो ङिद् भवितुं न शक्नोति। अस्यां परिस्थितौ यासुँडागमो ङिद् भवेत् तदर्थं ङिद्वचनद्वारा यासुँडागमो ङित् क्रियते। यासुँटो ङित्त्वविधानस्य फलम् 'स्तुयात्', 'स्तुयाताम्' इत्यादौ **"क्ङिति च"** सूत्रेण गुणनिषेधो विद्यत इति पूर्वमुक्तमस्ति।

**ज्ञापनस्य फलम्-** अस्य ज्ञापनस्य फलम् इदं विद्यते यद् **वक्ष्यमाणा** इत्यत्र ङीप् न भवति। वच्-धातोः **"लृँट् शेषे च"**[२६] सूत्रेण लृँट्-लकारे, तत्र अनुबन्धलोपे, लस्य स्थाने **"लृँटः सद्वा"**[२७] इत्यनेन विकल्पेन सत्संज्ञके आत्मनेपदसंज्ञके शानजादेशे, अनुबन्धलोपे, **"स्यतासी लृँलुँटोः"**[२८] सूत्रेण 'स्य' विकरणे, कुत्वे[२९], षत्वे[३०], वक्ष्य+आन इत्यवस्थायाम् **"आने मुँक्"**[३१] सूत्रेण मुँगागमे **वक्ष्यमाण** इत्यत्र **अनल्विधौ** इति निषेधस्य प्रवृत्तौ सत्यां स्थानिवद्भावेन **आन**

---

[२५] *बालमनोरमा-तत्त्वबोधिनीसहितायां वैयाकरणसिद्धान्तकौमुद्याम् (उत्तरार्धम्) वृत्तिभागे, पृष्ठ-सङ्ख्या-40*

[२६] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 3/3/13*

[२७] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 3/3/14*

[२८] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 3/1/33*

[२९] *चोः कुः- 8/2/30*

[३०] *आदेशप्रत्यययोः- 8/3/59*

[३१] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 7/2/82*

टित् न भवति, न च टित्त्वात् स्त्रीत्वविवक्षायाम् **"टिड्-ढाऽणञ्-द्वयसज्-दघ्नञ्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरपः"**[३२] सूत्रेण ङीप् भवति अपितु **"अजाद्यतष्टाप्"**[३३] इत्यनेन टाप् सम्भूय **वक्ष्यमाणा** इति अभीष्टं रूपं सम्पन्नं भवति। अन्यथा **अनल्विधौ** इति निषेधस्य अप्रवृत्तौ स्थानिवद्भावेन **आन** इत्यस्य टित्त्वात् स्त्रीत्वविवक्षायाम् **"टिड्-ढाऽणञ्-द्वयसज्-दघ्नञ्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरपः"** सूत्रेण ङीप् भूत्वा वक्ष्यमाणी इति अशुद्धं रूपं सम्पन्नं स्यात्।

**ज्ञापनस्य द्वितीयं फलम्- अचिनवम्**[३४] इत्यत्र **अ चि नु+अम्** इति दशायाम् **अकरवम्**[३५] इत्यत्र **अ कर् उ+अम्** इति स्थितौ **अनल्विधौ** इति निषेधस्य प्रवृत्तौ सत्यां स्थानिवद्भावेन **अम्** ङित् न भवति, न च **"क्ङिति च"** सूत्रेण गुणनिषेधो भवति अपितु **"सार्वधातुकाऽऽर्धधातुकयोः"**[३६] सूत्रेण गुणे अवादेशे[३७] च **अचिनवम्, अकरवम्** इत्यादीनि रूपाणि सम्पन्नानि भवन्ति।

**पुनः प्रश्नः- "हलः श्नः शानज्झौ"**[३८] सूत्रस्य भाष्य उल्लिखितं विद्यते यत्- **'ङिच्च पिन्न, पिच्च ङिन्न'**[३९] (अर्थात् यो ङिद्[४०] विद्यते स पित् न भवति तथा यो पिद्[४१] विद्यते स ङित् न भवति) इति भाष्यानुरोधेन तिप्-सिप्-मिप्-स्थलेषु एतेषां लिङ्स्थानिकानां पितां तिप्-सिप्-मिप्-प्रत्ययानां स्थानिवद्भावेनापि ङिद्वद्भावाभावाद् एतान् प्रत्ययान् ङितः कर्तुं ङिद्वचनद्वारा यासुँड् ङित् क्रियते। एवम्प्रकारेण यासुँटो ङित्त्वविधानम् आवश्यकं विद्यते,

---

[३२] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 4/1/15*

[३३] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 4/1/4*

[३४] *चिञ् (चयने), स्वादिगणः, उत्तमपुरुषस्य एकवचनम्।*

[३५] *डुकृञ् (करणे), तनादिगणः, उत्तमपुरुषस्य एकवचनम्।*

[३६] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 7/3/84*

[३७] *एचोऽयवायावः- 6/1/75*

[३८] *पाणिनीय-अष्टाध्यायी-सूत्रक्रमाङ्कः- 3/1/83*

[३९] *बालमनोरमा-तत्त्वबोधिनीसहितायां वैयाकरणसिद्धान्तकौमुद्याम् (उत्तरार्धम्) बालमनोरमायाम्, पृष्ठ-सङ्ख्या- 40*

[४०] *'ङ्' इद् यस्येति ङिद्, (बहुव्रीहि-समासः)।*

[४१] *'प्' इद् यस्येति पिद् (बहुव्रीहि-समासः)।*

अतः यासुँटो ङित्त्वविधानस्य व्यर्थत्वाभावात् यासुँटो ङित्त्वविधानं व्यर्थीभूय **'क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेधः'** इत्यस्य ज्ञापनं न करिष्यति।

**उत्तरम्-** पूर्वोक्तप्रकारेण यासुँटो ङित्त्वविधानस्य व्यर्थत्वाभावाद् यासुँटो ङित्त्वविधानं ज्ञापकं भवितुं न शक्नोति, अत एव उच्यते- **श्नः शानचः शित्त्वमपीह लिङ्गम्।**[४२] अर्थात् श्ना-प्रत्ययस्थानिकस्य शानजादेशस्य शित्त्वं व्यर्थीभूय ज्ञापयति- **'क्वचिदनुबन्धकार्येऽप्य- नल्विधाविति प्रतिषेधः'।** अत्र स्थलस्य स्पष्टीकरणम् एवमस्ति यत् **"हलः श्नः शानज्झौ"** सूत्रेण हलः परस्य श्नः स्थाने शानच् आदेशः क्रियते। अत्र प्रश्नो भवति यत् 'श्ना' प्रत्ययस्तु शिद् वर्तते, तस्माद् अस्य स्थाने विधीयमानः शानजादेशः **"स्थानिवदादेशोऽनल्विधौ"** सूत्रेण स्थानिवद्भावेन शिद् भविष्यति। एवम्प्रकारेण स्थानिवद्भावेनैव शानजादेशस्य शित्त्वात् **शानच्** इत्यस्य स्थाने यदि **आनच्** आदेशः क्रियते तथापि काचिद् हानिर्नास्ति अपितु मात्राद्वयस्य लाघवोऽपि विद्यते तस्मात् शानजादेशस्य शित्करणं व्यर्थं भवति तथा च व्यर्थीभूय ज्ञापयति- **'क्वचिदनुबन्धकार्येऽप्यनल्विधाविति प्रतिषेधः'।**

**शित्करणस्य स्वांशे चरितार्थत्वम् अन्यत्र फलत्वञ्च-** एवम्प्रकारेण अनुबन्धकार्ये कर्त्तव्ये **अनल्विधौ** इति निषेधस्य प्रवृत्तौ 'श्ना' प्रत्ययस्थानिकस्य 'शानच्' प्रत्ययस्य **"स्थानिवदादेशोऽनल्विधौ"** सूत्रेण स्थानिवद्भावेन शित्त्वाभावात् शानजादेशस्य शित्करणम् आवश्यकं भवति। एवमेव **वक्ष्यमाण** इत्यत्र **अनल्विधौ** इति निषेधस्य प्रवृत्तौ सत्यां स्थानिवद्भावेन **आन** टित् न भवति नैव च टित्त्वात् स्त्रीत्वविवक्षायाम् ङीप् भवति अपितु **"अजाद्यतष्टाप्"** इत्यनेन अजादिलक्षणः **टाप्** सन् **वक्ष्यमाणा** इति अभीष्टं रूपं सम्पन्नं भवति।

**निष्कर्षः-** एवम्प्रकारेण इदं कथयितुं शक्यते यत् **"यासुँट् परस्मैपदेषूदात्तो ङिच्च"** सूत्रे ङिद्ग्रहणं पित्सु तिप्-सिप्-मिप्-स्थलेषु लिङ्स्थानिकानां पितां तिप्-सिप्-मिप्-प्रत्ययानां ङित्त्वसम्पादनाय विद्यते।

---

[४२] *बालमनोरमा-तत्त्वबोधिनीसहितायां वैयाकरणसिद्धान्तकौमुद्याम्(उत्तरार्धम्)वृत्तिभागे, पृ. सङ्ख्या- 40*

**सहायकग्रन्थाः-**

1. वैयाकरणसिद्धान्तकौमुदी (उत्तरार्धम्), बालमनोरमा-तत्त्वबोधिनीसहिता प्रकाशकः- मोतीलाल बनारसीदासः। पुनर्मुद्रित-संस्करणम्- 2001
2. परिभाषेन्दुशेखरः, आचार्य-विश्वनाथशास्त्रिणः सुबोधिनी हिन्दीटीकोपेतः प्रकाशकः- चौखम्भा-संस्कृत-प्रकाशनम्, वाराणसी। पुनर्मुद्रित-संस्करणम्- 2009
3. लघुसिद्धान्तकौमुदी (द्वितीय-भागः), भैमी व्याख्यासहिता, प्रकाशकः- मी-प्रकाशनम्, दिल्ली। पुनर्मुद्रित-संस्करणम्- 2007
4. अष्टाध्यायी-सूत्रानुक्रमणिका (App) Directed by Prof. M. M. Jha, Developed by Srujan Jha,

~~~~~~~~~~~
~~~~~~~~~~~

# सौगन्धिकाहरणव्यायोगस्य विमर्शः

**डॉ. नरेन्द्रकुमार पण्ड्या**
प्राचार्यः,
श्रीसोमनाथसंस्कृतयुनिवर्सिटी-
सञ्चालितसंस्कृतमहाविद्यालयः, वेरावलम्

**संस्कृतवाङ्ग्मयवैविध्यम्**

संस्कृतवाङ्मये विशालं व्यापकं वैविध्यपूर्णं बृहत् साहित्यमुपलभ्यते। कविराजयायावरीयराजशेखरः वाङ्मयं परिचाययन्नाह काव्यमीमांसायां द्वितीयाध्याये "[1]इह हि वाङ्मयमुभयथा शास्त्रं काव्यं च..." इत्यादिना। तत्र शास्त्रं द्विविधं पौरुषेयमपौरेषेयं चेति निरूपितम्। अपौरुषेये वाङ्मये वेदवेदाङ्गोपवेदानां गणना विधीयते। पौरुषेयवाङ्मये पुराणम्, आन्वीक्षिकी, मीमांसा, स्मृतितन्त्रमिति चत्वारि शास्त्राणि कथितानि। तत्र आहत्य संक्षेपेण वेदाश्चत्वारः षडङ्गानि, चत्वारि शास्त्राणि इति इमानि चतुर्दशविद्यास्थाननि सन्ति। काव्यवाङ्मयमपि विशालं पञ्चदशं विद्यास्थानमस्ति इति यायावरीयं मतं चकास्ति तद्यथा – "सकलविद्यास्थानैकायतनं पञ्चदशं काव्यं विद्यास्थानमिति यायावरीयः"। वार्ता कामसूत्रं शिल्पशास्त्रं दण्डनीतिरिति चत्वार्यन्यान्यपि विद्यास्थानानीति मिलित्वा अष्टादश विद्यास्थानानि इत्यपि मतमस्ति। [2]आन्वीक्षिकी, त्रयी, वार्ता, दण्डनीतिश्चेति चतस्रो विद्याः इति कौटिलीयं मतमस्ति। पूर्वोत्तरपक्षरूपा द्विधा आन्वीक्षिकी विद्या। पूर्वपक्षे बौद्ध-जैन-चार्वाकदर्शनानि त्रीणि, उत्तरपक्षे साङ्ख्यं, न्यायः, वैशेषिकं च। इमे षट् तर्काः इति कथ्यते।

---

*[1] का.मि. अध्याय २ पृ. १०*

*[2] का.मि. अध्याय २ पृ. १०*

चतसृषु विद्यासु पञ्चमी साहित्यविद्या इति यायावरीयः कथयति। साहित्यविद्यायाः काव्यात्मिकायाः प्रचुरं वाङ्मयं समुपलभ्यते तत्र प्रामुख्येन काव्यं दृश्यश्रव्यत्वभेदेन द्विविधं मन्यते। महाकाव्यादिकं श्रव्यकाव्यमुच्यते रूपकोपरूपकादि दृश्यं काव्यं कथ्यते। दृश्यं रूपकादिमयं काव्यं नाट्यमित्यपि भण्यते, अत एव रूपकादिदृश्यकाव्यस्य साङ्गोपाङ्गनिरूपणकर्ता भरतमुनिरचितग्रन्थः नाट्यशास्त्रमिति कथ्यते। [३]"नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्" इति कालिदासः अभिप्रैति यत् विविधरुचियुक्तस्य समाजस्य नाट्यमेकं बहुप्रकारैः समाराधनकारकम् आनन्ददायकमस्ति।

**<u>नाट्यवेदः पञ्चमो वेदः</u>**

नाट्यशास्त्रानुसारं चतुर्भ्यः वेदेभ्यः सारतत्त्वमुपादाय ब्रह्मणा पञ्चमस्य नाट्यवेदस्याविष्कारः कृतः। तदुक्तं नाट्यशास्त्रे [४]"जग्राह पाठ्यं ऋग्वेदात् सामभ्यो गीतमेव च। यजुर्वेदादभिनयान् रसानाथर्वणादपि॥ (ना. शा.1.17) एवं रीत्या पाठ्यगीताभिनयरसमयोऽयं नाट्यवेदः पञ्चमोवेदः। एतच्चोक्तं काव्यमीमांसायां [५]"वेदोपवेदात्मा सार्ववर्णिकः पञ्चमो नाट्यवेदः इति द्रौहिणिः"।

अस्य नाट्यशास्त्रस्य चर्चा बहु प्राचीना विद्यते आचार्यभरतात् प्रागपि कोहलवात्स्यशाण्डिल्येत्यादीनां नामानि श्रूयन्ते। प्राचीनः सुप्रसिद्धो ग्रन्थस्तु भरतमुनिविरचितं नाट्यशास्त्रमेवाऽस्ति। भरतमुनेः अनन्तरं अपि बहवो नाट्याचार्याः नाट्यशास्त्रीयग्रन्थान् प्रणीतवन्तः। तत्र नाटकलक्षणरत्नकोषकर्ता सागरनन्दी, काव्यानुशासनकर्ता हेमचन्द्राचार्यः, नाट्यदर्पणकारौ रामचन्द्रगुणचन्द्रौ भावप्रकाशकारः शारदातनयः, अभिनयदर्पणकर्ता

---

[३] *मा.मि. अङ्कः १*

[४] *नाट्यशास्त्रम्*

[५] *का.मि. अध्याय २ पृ. १२*

नन्दिकेश्वरः, रसार्णवसुधाकरकारः शिङ्गभूपालः, नाट्यचन्द्रिकानिर्माता रूपगोस्वामी इत्यादयः प्रसिद्धा नाट्याचार्याः सन्ति।

**<u>नाट्यशास्त्रीयग्रन्थेषु रूपकनिरुपणम्</u>**

नाट्यशास्त्रे विंशाध्याये रूपकाणां निरूपणं प्राप्यते। यथा – "[६]कथयिष्याम्यहं विप्रा दशरूपविकल्पनम्। नामतः क्रमतश्चैव तथा चैव प्रयोगतः" ॥ नाटकं सप्रकरणमङ्को व्यायोग एव च। भाणः समवकारश्च वीथी प्रहासनं डिमः॥ ईहामृगश्च विज्ञेयं दशमं नाट्यलक्षणम्। एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः॥(ना. शा. २०/१ तः ३) दशरूपकारकग्रन्थरचयिता धनञ्जयः दशरूपके संक्षिप्य प्रगुणरचनया नाट्यशास्त्रैकदेशस्य दशरूपकस्य निरूपणं कृतवान्। [७]"उद्धृत्योद्धृत्य सारं यमखिलनिगमान्नाट्यवेदं विरिञ्चिश्चक्रे यस्य प्रयोगं मुनिरपि भरतः ताण्डवं नीलकण्ठः। शर्वाणी लास्यमस्य प्रतिपदमपरं लक्ष्म कः कर्तुमिष्टे नाट्यानां किन्तु किञ्चित्प्रगुणरचनया लक्षणं संक्षिपामि॥ (द. रू. १ – ८) धनञ्जयः रसमयत्वात् आनन्दनिस्यन्दीनि रूपकाणि इति निरूप्य अवस्थानुकरणं नाट्यं इति निरूपितवान् तदनुसारं [८]"काव्योपनिबद्धधीरोदात्ताद्यवस्थानुकार-श्चतुर्विधाभिनयेन तादात्म्यापत्तिः नाट्यमिति" व्याख्यातमाचार्यधनिकेन।

आचार्यभरतमुनिवत् धनञ्जयोऽपि दशरूपके ग्रन्थसंज्ञानुसारं दशरूपकाणि स्वीकरोति। विष्णोः दशावताररूपवत् नाट्यरस्यापि दशरूपकाणि सन्ति। [९]"दशरूपानुकारेण यस्य माद्यन्ति भावकाः। नमः सर्वविदे तस्मै विष्णवे भरताय च॥ (द. रू. १ – २) दशधा

---

[६] *ना.शा २०/१ तः ३१*

[७] *द.रू. १.४*

[८] *द.रू. १.७ पृ. ८*

[९] *द.रू. १.२ पृ. २*

रूपकमित्यभिधायोद्देशतो रूपकभेदा उक्ताः [१०]"नाटकं सप्रकरणं भाणः प्रसहनं डिमः। व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति। (द. रू. १.८)

काव्यानुशासनकर्ता आचार्यहेमचन्द्रः काव्यानुशासने अष्टमाध्याये प्रबन्धात्मककाव्यभेदान्निरूपयन् अस्य काव्यस्य प्रेक्ष्यं श्रव्यं चेति द्वौ भेदावुक्तवान्। [११]"काव्यं प्रेक्ष्यं श्रव्यं च। (का.शा. ८.१) अत्र दृश्यश्रव्यत्वभेदेन प्राचीनालङ्कारिकैः काव्यस्य द्वैविध्यं निरूपितं तत्र दृश्यशब्दार्थं प्रेक्ष्य-शब्दस्य प्रयोगः काव्यानुशासने दृश्यते। प्रेक्ष्यस्य प्रथमतो द्वौ भेदौ इत्यपि अभिनवमभिहितमाचार्यहेमचन्द्रेण तद्यथा [१२]"प्रेक्ष्यं पाठ्यं गेयं च" (का.शा. ८-२) पाठ्ये नाटकप्रकरणनाटिकादीनां द्वादशानां आदिशब्दे च अनभिहितानामन्येषामपि समावेशः सूचितः। [१३]"पाठ्यं नाटकप्रकरणनाटिकासमवकारेहामृगडिमव्यायोगोत्सृष्टिकाङ्कप्रहसनभाणवीथी सट्टकादि॥ (का. शा. ८.३) अत्रैव प्रेक्ष्यकाव्यप्रभेदे गेयकाव्ये [१४]"गेयं डोम्बिकाभणिकाप्रेरणरामाक्रीडहल्लीसकरासकगोष्ठी-श्रीगदितरागकाव्यादि॥ (का. शा. ८-४) अत्रापि गेयप्रकारकप्रेक्ष्यभेदनिरूपणे आदिशब्देन अनुक्तानामन्येषां ग्राह्यत्वं सूचितम्। नाट्यदर्पणे भूरिभेदभृदभिनेयकाव्यस्य प्रसिद्धानां प्रकाराणां लक्षणं कर्तुं प्रतिज्ञाय [१५]"नाटकं प्रकरणं च नाटिका प्रकरण्यथ। व्यायोगः समवकारः भाणः प्रहसनं डिमः॥ अङ्के ईहामृगो वीथी चत्वारः सर्ववृत्तयः। त्रिवृत्तयः परत्वाष्टौ कैशिकीपरिवर्जनात्॥ (ना. द. १ ३-४ पृ.३) अत्रापि नाट्यदर्पणकाराभ्यां रामचन्द्रगुणचन्द्राभ्यां दशरूपकस्थाने

---

[१०] *द.रू. १.८ पृ. ५*

[११] *का.शा. ८.१ पृ. १६३*

[१२] *का. शा. ८.२ पृ. १६३*

[१३] *का. शा. ८.२ पृ. १६३*

[१४] *का. शा. ८.८ पृ. १६६*

[१५] *ना. द. १.३.४*

द्वादशरूपकास्वीकारः कृतः। हेमचन्द्राचार्यैः प्रेक्ष्यकाव्ये सट्टकादिस्वीकारः कृतः अत्र तु सट्टकस्य निर्देशः नास्ति किन्तु प्रकरण्या निर्देशोऽधिकः प्राप्यते।

**<u>व्यायोगस्य लक्षणम्</u>**

व्यायोगस्य सर्वैः नाट्यशास्त्रविद्वद्भिः स्वीकारः कृतः। तस्य लक्षणं नाट्यशास्त्रे इत्थं प्राप्यते। तद्यथा – [१६]“व्यायोगस्तु विधिज्ञैः कर्तव्यः ख्यातनायकशरीरः। अल्पीस्त्रीजनयुक्तस्त्वेकाहकृतस्तथा चैव बहवस्तत्र च पुरुषाः कविभिः कार्या यथा समवकारैः। न च तत्प्रमाणस्तु तदेकाङ्कः संविधातव्यः। न च दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः। युद्धानियुद्धाघर्षणसङ्घर्षश्चापि कर्तव्यः एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः (ना. शा. २०/९४-९६ १/२)

दशरूपककारेण व्यायोगलक्षणं इत्थमभिहितम्। तद्यथा [१७]“ख्यातेति वृत्तो व्यायोगः ख्यातोद्धतनराश्रयः। हीनो गर्भविमर्शाभ्यां दीप्ताः स्युर्डिमवद्रसाः॥ अस्त्रीनिमित्तसंग्रामो जामदग्न्यजये यथा। एकाहाचरितैकाङ्को व्यायोगो बहुभिर्नरैः”। (द. रू. ३-/६०-६२) काव्यानुशासने व्यायोगस्य लक्षणमनेन प्रकारेण नाट्यशास्त्रकारिकोद्धरणरूपेण कथितम्। तद्यथा [१८]“व्यायोगस्तु विधिज्ञैः कार्यः प्रख्यातनायकशरीरः। अल्पस्त्रीजनयुक्तस्तोकाहकृतस्तथा चैव। बहवश्च तत्र पुरुषाः वाञ्छ्यन्ते यथा समवकारे। न तु तत्प्रमाणयुक्तः कार्यस्त्वेकाङ्क एवायम्। न च दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः। युद्धनियुद्धाधर्षणसंघर्षकृतश्च कर्तव्यः। एवं विधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः। (ना. शा. १८.९०-९३ अ)

---

[१६] *ना.शा २०/९४ तः ९७ पृ. २३३*

[१७] *द.रू. ३/६०-६२ पृ. १७७*

[१८] *का.शा ८.३ पृ. १६५*

अत्र हेमचन्द्राचार्येण यन्नाट्यशास्त्रीयमुद्धरणं प्रस्तुतं तत्र पं. बटुकनाथशास्त्रिसम्पादिते च नाट्यशास्त्रे व्यायोगलक्षणे किञ्चित्पाठभेदो दृश्यते। एवं पं.बटुकनाथशास्त्रिसम्पादिते विंशाध्याये व्यायोगलक्षणं काव्यानुशासने च अष्टादशाध्याये व्यायोगलक्षणमित्यपि अन्तरं विलोक्यते।

आचार्यरामचन्द्रगुणचन्द्राभ्यां नाट्यदर्पणे व्यायोगलक्षणं द्वितीयविवेके इत्थं कथितम्। यथा – [१९]"एकाहचरितैकाङ्कः गर्भामर्शविवर्जितः। अस्त्रीनिमित्तसङ्ग्रामः नियुद्धस्पर्द्धनोद्धतः। स्वल्पयोषिज्जनः ख्यातवस्तुदीप्तरसाश्रयः अदिव्यभूपतिस्वामी व्यायोगो नायिकां विना"॥ ना.द. २.९-१० पृ. ६५-६६

एवमुक्तेषु नाट्यशास्त्रादिनिरूपितेषु व्यायोगलक्षणेषु निम्नोक्तं स्वरूपमुपलभ्यते। व्यायोगः ख्यातोद्धतनराश्रयः ख्यातवृत्तः, अल्पस्त्रीपात्रः, बहुपुरुषपात्रः, अदिव्यराजर्षिनायकः, गर्भविमर्शसन्धिरहितः, डिमवद्दीप्त रसाश्रयः, एकाहाचरितैकाङ्कः, युद्धनियुद्धाधर्षणसंघर्षयुतः भवति। साहित्यदर्पणकारविश्वनाथमते व्यायोगे कैशिकीवृत्तिः न भवेत् हास्य श्रृङ्गारशान्तेतरः रसः स्यात्। तद्यथा [२०]"कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः। राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः। हास्यश्रृङ्गारशान्तेभ्यः इतरेऽत्राङ्गिनो रसाः। (सा. द. ६/२३२-३३ पृ. ५४९)

अनेन प्रकारेण व्यायोगस्य स्वरूपमुपलभ्यते।

**<u>व्यायोगरूपकग्रन्थाः</u>**

संस्कृतसाहित्ये नैके व्यायोगग्रन्थाः लभ्यन्ते। तेषु वत्सराजकविकृतः किरातार्जुनीयव्यायोगः प्रह्लादनदेवरचितः पार्थव्यायोगः काञ्चनार्यकृतः

---

[१९] *ना.द. २.९-१० पृ. ६५-६६*

[२०] *सा.द. ६/२३२-२३३ पृ. ५४९*

धनञ्जयविजयः रामचन्द्ररचितः निर्भयभीमव्यायोगः विश्वनाथविरचित सौगन्धिकाहरम् इत्यादयः प्रसिद्धाः व्यायोगग्रन्थाः सन्ति[२१]। (सं. सा पृ. १३९)

**सौगन्धिकाहरणव्यायोगपरिचयः**

सौगन्धिकाहरणाख्यो व्यायोगः साहित्यदर्पणकारविश्वनाथेन रचितः। व्यायोगलक्षणं निरूप्य तदुदाहरणरूपेण सौगन्धिकाहरणस्योल्लेखः तेन साहित्यदर्पणे कृतोऽस्ति। ग्रन्थारम्भे कविः वाक्प्ररोहभुवं प्रतिभामयीं शारदां देवीं प्रणमति। ततः सूत्रधारः नान्द्यन्ते प्रविश्य कथयति यत् यत्र “वृत्तिर्गिरामुक्तिविशेषहृद्या धीरोद्धतं नेतृविचेष्टितं च। वीराद्भुतौ यत्र रसौ च दीप्तौ प्रत्येकमेतानि हरन्ति चेतः। (सौ. ह. र. पृ. २) ईदृग्वृत्त्यादिकं स्यात् तादृशं किमपि निबन्धं निरूपयितुं सामाजिकैरहमादिष्ट इति। एतच्च विचिन्त्य सः विश्वनाथकवेः उक्तयः अकाञ्चनमरत्नं विदुषां कर्णभूषणमिति कथयति। अगस्त्यः सुधीः विश्वनाथस्य मातुल इत्यपि निर्दिशति। तेन रचितं सौगन्धिकाहरणं प्रेक्षणकं रूपकं प्रयुज्य सामाजिकमनांसि आवर्जयामि इति कथयित्वा सूत्रधारः नटीं आह्वयति पृच्छति किमिति एतावता नेपथ्यं न विधृतिमिति तदा परितः कुसुमानि समाहर्तुं अनुप्रेषितः इदानीमपि नागतः ततः विलम्ब इति तदा सूत्रधारः कथयति यथा देव्या द्रौपद्याः कृते भीमः सौगन्धिकानि आहरति तथा अहं सद्य एव तव कृते प्रसूनानि (पुष्पाणि) आहरामि। यथा “कृत्यं कियन्मात्रमिदं भवत्याः सद्यः प्रसूनान्यहमाहरामि। देव्याः कृतेऽसौ द्रुपदात्मजायाः सौगन्धिकानीव समीरसूनु। (सौ. ह. ७. प. 4) एतत्प्रस्तावनानन्तरं धृतकार्मुकः गदापाणिः प्रविशति भीमसेनः कथयति च यत् द्रौपद्याः सः पवनोपनीतं सौगन्धिकं विलोक्य ईदृशानि अन्यानि सौगन्धिकानि आनेतुं सः याचितः। द्रौपदी मम प्रेम बलं परीक्षितुमेवं मां याचितवतीति प्रतिभाति। अतः युद्धे कुबेरमपि विनिर्जित्य इमं

सौगन्धिकाहरणविधिं निष्पाद्य द्वयं प्रेम बलं च द्रौपद्यै दर्शयिष्यामि। भीमः ज्येष्ठभ्रातरं युधिष्ठिरमनिवेद्यैव निर्गतः। पृष्टे सति धर्मराजो नेति कथयेत् तदा प्रियाया द्रौपद्याः प्रणयक्षतिः भवेत् अथवा विपर्यये गुरुवचनातिक्रमः स्यात्। द्रौपद्यै आश्वासनं दत्त्वा त्वरितं प्रतिश्रुतमर्थं उपपादयितुं ततः सौरभमयः प्रवाहः सौगन्धिकस्य उपयानमार्गं सूचयति इति उक्त्वा तेन मार्गेण वनप्रदेशान् पश्यन् गच्छति। अत्र वनप्रदेशानां रुचिर वर्णनं प्राप्यते। अस्मिन् गन्धमादनगिरौ रामदासो हनूमान् निवसति। अत्र स्थितश्च आर्यो हनूमान् रघुपतेश्चरितानि श्रृणोति। हनूमतः अत्र प्रवेशो वर्तते। हनूमान् वदति। "अत्र स्थितो रघुपतेश्चारिताद्भुतानि देवस्य किन्नरगणैरूपवीणितानि। आकर्णयन्नमृत-सिन्धुमिवावगाढः कालं महान्तमपि यातमहं न जाने। (सौ. ह. २६. पृ११) अत्रावसरे हनूमतः दक्षिणनेत्रस्पन्दो भवतीति तेन किमपि भद्रं भविष्यतीति विचारयति। अत्र भीमसेनः अरण्यगहनप्रदेशजन्तूनां क्षोभाय गर्जनां करोति कुतः अयं सिंहनादः इति हनूमान् दिशः पश्यति। सर्वत्र वने वनचराणां भद्रचेष्टितं पश्यति। अत्र निरूपिते पद्ये भयानकरसस्य दर्शनं भवति। यथा "उत्पलुत्य त्वरितं पतन्ति शिखिनस्त्रासादनाप्तद्रुमा विभ्रश्यान्तिकदेश एव हरिणद्वन्द्वं मिथोऽन्विष्यति। धावन्नेव विवर्तिताननमिभः प्रेम्णा प्रियामीक्षते निर्निद्रः क्षणमास्त एष शयनादर्धोत्थितः केसरी। (सौ. ह. २५. पृ. १३) अत्र भयानकरसेन सह अद्भुतरसः, हास्यरसः अपि आस्वाद्यते। अत्र कवेः रसमयी कवितारचनाचातुरी दृश्यते। ततः हनूमान् विलोक्य जानाति यत् कश्चित्पुरुषः अत्र दृश्यते। अनेनैव अयं क्षोभः कृतः स्यात्। ततः भीमः गन्धमादननिकटवासिनः वनौकसः स्वाभिमानप्रदर्शनपूर्वकं कुबेरक्रीडासरोवरमार्गं पृच्छति। "यः प्राच्यां दिशि राजकं भुजबलोत्सिक्तं विजित्याहृतैरर्थैः सम्भृतराजसूयमकृत ज्येष्ठं निजभ्रातरम्। भीमः सोऽयमुपागतो भुवमिमां सौगन्धिकैरुत्सुकः तस्मै शंसत वर्त्म येन धनदक्रीडासरः प्राप्यते। (सौ. ह. २७. पृ. १४) इदं श्रुत्वा हनूमान् अवगच्छति

यदेष वृकोदरो भीमः इति। स्वस्यापि वायुपुत्रत्वात् भीमस्यापि वायुपुत्रत्वात् वत्सस्य लघुबन्धोः दर्शनेन बहोः कालात् गन्धमादिनगिरौ मम स्थितिः फलेग्रहिः (सफला) जातेति हनूमान् मारुतिर्मन्यते महासत्त्वः जितश्रमः अमानुषीशौर्यशक्तिसम्पन्नः भीमः इति कथयति हनूमान्। यदि अमानुषी शक्तिः न स्यात्तर्हि अत्र मनुष्यसाधारणदुष्प्रवेशे गन्धमादनपर्वतवने प्रवेशं कर्तुं न पारयेत्। ततः भीमसेनः मार्गमध्यास्य स्थितं शाखामृगं (वानरं) पश्यति। अचञ्चलं स्थिरं धीरं वानरं पश्यन् भीमः आश्चर्यमनुभवति। भीमश्चिन्तयति भूमेर्दिव्यतया वानरस्य अयं गुणः स्यात्तत्पश्चात् कथयति विचार्य यत् अन्येषु सत्त्वेषु तु एवंविधो गुणः नास्ति। भीमस्य दर्शनेन समुत्पन्नाक्षिबाष्पगात्रपुलको हनूमान् गाढाश्लेषं वाञ्छन्नपि कञ्चित्कालमात्मानं निह्नुत्य अवतिष्ठते। ततः उभयोः मध्ये वाचिकसङ्घर्षः जायते। सम्फेटो रोषभाषणम् इति रूपः। हनूमान् पृच्छति, "भोः किं त्वदीयचेष्टोपादान एष संक्षोभः काननभुवाम्"। भीमसेनः "अथ किम्" हनूमान् "अये किमर्थमाकुलयसि त्रासविवशविभ्रमान्तसत्त्वजातानि काननानि?" भीमसेनः (साश्चर्यम् आत्मगतम्) "अहो धाष्टर्यं वानरस्य (प्रकाशम्) "किमत्र भवतः संरम्भः?"। (सौ. ह. ३९ अनन्तरपद्यम् पृ. १९) संवादेऽस्मिन् कस्त्वमिति हनूमता पृष्टे ननु भो क्षत्रियोऽहमिति भीमसेनेन उत्तरिते हनूमान् कथयति क्षत्रियत्वपरिचयस्य कथनं नावश्यकं यतो हि एतत्तु तव वपुषैव कथितम्। अहं तु तव नाम पृच्छामि तदा भीमः अजातशत्रुं महाराजं जानासीति पृष्टे कोऽयमजातशत्रुरिति हनूमता तस्य रोषोत्पादनाय प्रतीपमुक्ते सति युधिष्ठिरमपि न जानासीति कथिते हनूमानुक्तवान् यः शत्रुभिः हतराज्यः काननमधिवसति सः? अम् जानामि तम्। एवं वार्तालापे भीमोऽहं इति परिचयं ददाति भीमः। भीमः कथयति हनूमान् समुद्रमालङ्घ्य यथा लङ्कां गतवान् तथा अहमपि विलङ्घ्य गच्छामि एतच्च श्रुत्वा मयि अनेन निर्व्याजं स्नेहः बहुमानश्च दर्शितः इति हनूमान् आत्मनि हर्षमनुभवति। वादविवादे पुनः भीमसेनः हनूमद्गुणान् वर्णयन् कथयति यत्

“निशाचरगृहोत्थितैः हुतभुजशिखामण्डलैर्यदीयबलसम्पदामजनि जैत्रमारार्तिकम्। असावपि निरुध्यते त्रिभुवनैकवीरस्त्वया ततस्त्व महात्मनः पुनरमी कियन्तो वयम्। (सौ. ह. ५२ पृ. २७) अत्र सुन्दरा अभिनवा जैत्रारार्तिककल्पना सहृदयहृदयवर्जिका दृश्यते। हनूमान् भीमसेनं प्रत्याह, “अये पाण्डव असौ मर्कटः किमिति एवं अतिगौरवं तस्मै प्रदीयते?”। एतत् श्रुत्वा भीमः हनूमन्तं तुल्यवानरजातित्वान्मान्यस्य निन्दाकारणात् जात्यैकदूषकं वदति। हनूमांस्तु वायुदेवस्य पुत्रः वस्तुतः त्वं तस्य केवलया जात्या अपि न समः चेष्टितस्तु पुनः किम्? हनूमान् काकुत्स्थयोः रामलक्ष्मणयोः जीवितदानशौण्डः अस्ति। द्राग्दक्षिणादुत्तरतो दिगन्ताद्यस्याहताभ्यामजनिष्ट बाहुः। मैथिल्यभिज्ञान-महौषधीभ्यां काकुत्स्थयोर्जीवितदानशौण्डः। (सौ. ह.५९ पृ. ३०) संवादे हनूमान् भीमस्य स्वात्मनि युधिष्ठिरतोऽपि अधिकः मयि स्नेह इति सहर्षमात्मगतं चिन्तयति। किञ्चिदुच्छृङ्खलभाषितैः हनूमान् भीमं कोपयति कथयति च महान् अम्भोराशिः समुद्रः कपिना तेन लङ्घितः इति जाल्मोदितं मिथ्याभाषणमेव तदा भीमः आह “अये चार्वाक इव निर्विवेकहृदयोऽसि। यत्तस्य विक्रमकथास्वपि वायुसूनोः प्रत्यक्षमेव विबुधैरभिनन्दितासु संस्मृत्य यस्य मुहुरुद्यममूर्मिलौल्याद्धत्ते, घुनाऽपि भयकम्पमिवाम्बुराशिः। (सौ. ह. ६२, पृ. ३१) अत्र समुद्रस्य तरङ्गलौल्ये भयकम्पस्य रुचिरा कविकल्पना दृश्यते। अक्षयस्य क्षयकर्ता हनूमान् किमिति मेघनादेन हतः वैरशोधनायेति भीमसेनेन प्रोक्ते हनूमान् अकथयत् विभीषणस्य प्रसादेन रावणः रुषं अशमयत् तेन हतः इति। राक्षसराजरावणस्य नगर्यां लङ्कायां सुभटरत्नानां विशेषसारवैज्ञानवैकटिकबाहुर्यदि तव न वीरः तर्हि हे सर्वज्ञ तव मते कः प्रवीरः इति भीमसेनेन पृष्टे हनूमान् कथितवान् अहं तु प्रागेव मौनं धारितवान् मया अस्मिन् विषये न किमपि वक्तव्यम्। किं च भवान् हनूमति स्निह्यतीति मया न ज्ञातमिति प्रसङ्गतो मया किञ्चिदुक्तम्। एतदाकर्ण्य भीमो जगाद यद् वयं तेन हनूमता सह स्नेहं विरोधं वा कर्तुं कथं समर्थाः

स्याम। तत्र स्नेहं प्रथयितुं रघुनन्दन एव समर्थः विरोधं प्रथयितुं च रावण एव समर्थः न वयम् इति। स्नेहं विरोधमथ वा सुभटेण तेन के वा वयं रचयितुं परिमेयसत्त्वाः। आद्यं पुनः प्रथयितुं रघुसूनुरेव तत्रेतरं तु दशकन्धर एव योग्यः। (सौ. ह. ७४ पृ. ३७) इदं सारमहत् वचः भीमस्येति हनूमान् चिन्तयति। अग्रे भीमः भ्रातृत्वात् मम हनूमति स्नेहः इति कथितवान्। अग्रे च कथयति न केवलं भ्रातृत्वमेव प्रीतिकारणं महावीरत्वमपि तस्य बहुमानास्पदमेव। अयं हनूमान् इमां गन्धमादनभुवमुपेयुषोऽपि तव दृशः पुरः स्थितोऽपि कथं न प्रकाश्यते। एतदाकर्ण्य भीमेन तर्कितं अयमेव हनूमान् उपरचिताकारगुप्तिः महावीरः इति ततः हनूमान् स्वात्मानं प्रकाशयति। आश्लेषनिर्वृतिषु कालमियन्तमारादुत्कण्ठया विमृदितानि बलान्निगृह्णन्। गात्राणि वज्रकठिनप्रकृतिः पुरस्तादास्ते स एष ननु वत्स तवाग्रजन्मा। (सौ. ह. ७७ पृ. ३९) अन्ते हनूमान् आशिषं प्रददाति तव भुजे सुचिरं निर्विशङ्का जयश्रीः वसतु। वत्स, चिरनिबद्धोऽयं परिरम्भणमनोरथः पूर्णतामस्य जनस्य इति गाढमाश्लिष्य हनूमान् स्पर्शसुखम् उपगूहनोत्सुक अनुभवति। भीमः चक्षुर्वर्त्मगतेन हनूमता स्वात्मानं धन्यं कृतं मनुते। हनूमान् सस्नेहं पुनरपि समाश्लिष्य स्वपार्श्वे भीमम् उपवेशयन्नाह सौभ्रात्रं सर्वातिशायिनः चित्तनिर्वृत्तिनिधेः प्रणयसारस्य पराकाष्ठा इति। यस्य कस्यापि भावस्य लोकः तदैव प्रामाण्यं स्वीकरोति यदा आत्मना स्वयं मनुभवति। ममाऽपि हृदये तर्कः कुतूहलं च आसीत् रामादिभ्रातृणां हार्दं स्नेहं दृष्ट्वा किन्तु अद्य साक्षादनुभूय ईदृग्भूतं तत् सौभ्रात्रं सौहार्दमिति वत्स त्वत्सङ्गमामृतनिर्वृत्तेः अनुभवबलाद् अनुभाति। "अनितरपदं दृष्ट्वा हार्दं मिथो रघुवीरयोरहह किमिदं कीदृग्वेति प्रतर्क्य न निश्चितम्। हृदयमधुना वत्स त्वत्संगमामृतनिर्वृतेरनुभवबलादीदृग्भूतं तदित्यनुभाति मे। (सौ. हा. ८२. पृ. 42)। ततो भीमसेनः सलज्जं वायुनन्दनस्य क्षमां याचते मम वाक्यं विवेकतन्तुव्यत्यासाद् विनयव्यभिचरितमासीत् तेन मम हृदः सलज्जं = विलक्षमास्ते अयं मदीयः

अतिक्रमः क्षन्तव्यो भवता। तदा हनूमान् कथयति यन्न त्वया किमपि अविनीतं कृतमस्मासु। अयं तु शूराणां समयः यत् ज्ञातेषु अज्ञातेषु वा स्वजनापमानकारिषु महासत्त्वाः प्रतिकूलताम् आचरन्ति। अपरं च कोपकाटाक्षमुखदर्शनात् धीरोद्धतनिष्ठुरवचनश्रवणाय स्पृहावता मया एवं कठोरमुक्तस्त्वम्। भीमदर्शनेन हनूमतः स्वानन्दः कीदृशः इति स आह सूर्यदेवात् शब्दब्रह्मणः शब्दानुशासनस्य अधिगमे, लङ्कायां सीताया दर्शने दिव्यौषधेः लक्ष्मणस्य जीवितप्रत्यावर्तने न तथा प्रमोदे मनो मग्नं यथा अधुना त्वयि दृष्टे सति।

**शब्दब्रह्मणि न तथाप्यधिगते देवान्निदाघद्युते-**
**र्जानक्यां न तथा पुरे सुररिपोरालोकितायामपि।**
**प्रत्यावर्तितजीविते न च पुनर्दिव्यौषधैर्लक्ष्मणे**
**दृष्टे त्वय्यधुना यथा भवति मे मग्नं प्रमोदे मनः॥** (सौ. ह. ८५ पृ. ४३)

भीमसेनस्य भ्रातृवात्सल्यं विलोक्य हनूमान् प्रशंसां करोति त्यत् सौभ्रात्रकथने पाण्डवानां पुरतः अन्ये प्रत्युदाहरणभूताः अर्थात् पाण्डवानां सौभ्रात्रीयतुलना अन्यैः सह कर्तुं न शक्यते। भीमसेनः गौरवं मारुतिनन्दनस्य प्रशंसां कुर्वन्नाह "लोकानामुपकर्तुमेव भवतो जाताभिजाता जनिस्तद्रक्षांसि विमर्दितानि बहुशो दुष्टानि धीर त्वया। ईदृक्पौरुषसाहसैकरसिकं सूत्वा सुतं त्वामभूद् देवो गन्धवहः स एष भुवनेष्वग्रेसरः पुत्रिणाम् (सौ. ह. ८९ पृ. ४५) अयं लोकवादः यथा हनूमतः कृते तथा भीमस्य कृते अपि अविशेषः एव अस्ति। गन्धमादनवने आगत्य हनूमतो दर्शनमुपलब्धं अतः भीमः द्रौपद्या आभारं मन्यते द्रुपदसुता महोपकारिणी इति च वदति। सौगन्धिकान्याहर्तुमत्र भीमः प्राप्त इति विदित्वा यक्षाणां विजयाय दिव्यसरोवरस्य प्रकाशनाय भीमाय विद्यां समर्पयति। विद्यां प्राप्य भीमः आश्चर्यमनुभवन् आह "भजति भृशतां सत्त्वं धत्तस्तमोरजसी क्षयं स्फुरति हृदये बोधः कोऽपि प्रसीदति चेतना। यदिदमखिलं प्रागेवोन्मीलितं त्वयि वीक्षिते नियतमधुनाप्येषा विद्या ददाति

तदेव मे॥ (सौ. ह. ९४ पृ. ४९) हनूमतः लब्धविद्यः भीमः हनूमत्सङ्गतेन अविज्ञातयुधिष्ठिरविरह आसीत् सम्प्रति हनूमतो वियोगेन विरहद्वैगुण्यं सम्पत्स्यत इत्यनुभवति "युधिष्ठिरस्य विरहो न ज्ञातस्त्वयि सङ्गते। त्वद्वियोगेन तेनापि नूनं सम्बध्यते मिथः। (सौ. ह. ९६ पृ. ५०) ततो भीमः दिव्यसरःपरिसरभुवं प्राप्नोति रमणीयं दिव्यसरो वर्णयति पश्यन् भीमः "सोपानोपलमूलघातमुखर प्रेंखत्तरङ्गाकुलं दृष्टेर्दर्शितदृष्टिवृद्धि तदिदं दिव्यं सरो दृश्यते। यक्षःस्त्रीकुचकुट्टनाद्विलुलितं यस्य प्रसादं शनैराबध्नाति तलप्रदेशनिपतत्काश्मीरपङ्कं पयः। उद्दामप्रचलत्पदोपमर्दनेष्वक्लिष्टानि प्रतिनवकान्तकेसराणि। एतस्मिन् कनकमायानि वस्तुशक्त्या पद्मानि भ्रमरकदर्थनां सहन्ते। (सौ. ह. १००, १०१ पृ. ५२) ततो हनूमान् सौरभसार्थवाहानां गन्धवाहानां लाभेन विश्रान्तिं समनुभवति। भीमः चौर्येण सौगन्धिकाहरणं नेच्छति, धनपुरसैनिकैः समरसुखमनुभूय सौगन्धिकाहरणं वञ्छति। ततो भीमस्य धनपुरसैनिकैः यक्षै वाचा कलहः भवति। यक्षाः महतो धनदस्यावमाननां कुर्वन्तं भीमं अहङ्कारिणं कथयन्ति (नेपथ्ये) "कौरव! कीदृशोऽयमहङ्कारस्य परिणामः येन महतोऽप्येवमवमन्यसे। पुरद्विषोऽर्धासनवासयोग्यः क्वायं कुबेरः क्व भवान्वराकः। तत्र त्वयेत्थं किमतिप्रसक्तं योद्धुं तवेच्छा यदि योधयास्मिन्॥ (सौ. ह. ११३. पृ. ५९) एतादृशे वाक्कलहे सम्पद्यमाने कञ्चुकिना दर्शितमार्गः कुबेरः स्वयमायाति। स्वाज्ञातिक्रमणसाहसाद् अपराद्धमपि वृकोदरं भीमं उद्दिश्य प्रीतहृदयः कुबेरः इति कञ्चुकी तदीयं सौजन्यमिदं वर्णयति। नेपथ्ये भीमस्य यक्षैः सह युद्धस्य वर्णनमस्ति। कुबेरः सादरमवलोक्याह "किर्मीरबाहुबलवध्यशिलातलेऽस्मिन् प्रेङ्खन्ति पाण्डुसुतवक्षसि यक्षबाणाः। तानेष कङ्कटविघट्टनतः पृषत्कैः प्रत्युत्थितान् नमसि खण्डयति प्रवीरः। (सौ. हा. १२०, पृ. ६३) ततः कञ्चुकी युद्धचमत्कारं कुबेरं दर्शयति "सुभटचापनिरन्तरनिःसृतैः शरशतैः स्थिगिते नभसि क्षणात्। दिनपतेर्महसा रजसाऽप्यहो पतितुमुत्पतितुं च न पार्यते। (सौ.

ह. १२३. पृ. ६४) ततो वृकोदरसमरसम्मर्दमसहमानाः समन्ततः यक्षभटाः प्रद्रवन्तीति दृष्ट्वा कञ्चुकी विषादमुद्गिरति। भीमः उपसंहृतायुध इति तदीयाम् श्लाघां च कुरुते।

युद्धोपरामे भीमसेनं स्पृहं पश्यन्नाह कुबेरः यत् अश्लिष्टो विजयश्रिया रणरजःसंसक्तगण्डस्थलस्तोकस्तोकविरज्यदक्षिकथितक्रोधैकदेशव्ययः। वक्षःसीम्नि कठोरकङ्कटदृढस्यूतानिषूनुद्दरन् वीरः पौरव एष साम्प्रतमितो धीरोद्धतं वर्तते। (सौ. ह. १२५, पृ. ६६) ततो भीमस्य शौर्यं दृष्ट्वा मनोबलं च विलोक्य कुबेरः आत्मगतं ब्रूते "समग्रधैर्यस्थितयोऽस्य दृष्टयो जगन्त्यपि त्रीणि तृणाय मन्वते। तदेष जेतुं हृदि मामपि प्रभुर्व्यजेष्ट यक्षानिति कोऽत्र विस्मयः। (सौ. ह. १२९, पृ. ६७) अग्रे कञ्चुकी धनपतिर्भवन्तं द्रष्टुमिच्छति इति भीमं प्रति वदति तदा प्रभोः कुबेरस्य शासनमङ्गीकृत्य सविनयं भीमः गच्छति प्रणमति। कुबेरः भीममालिङ्गितुं कथयति, भीमः स्वापराधं विनयव्यतिक्रमं मर्षयितुं प्रार्थयते। तदा कुबेरः कथयति त्वया यत्कृतं तत्तु वीरस्वभावचेष्टमेव "ननु मानरुचेरयं गुणः सहतेऽसौ परगर्जितं न यत्। निशमय्य घनाघनध्वनिं निभृतस्तिष्ठति किं नु केसरी। (सौ. ह. १३१ पृ. ७१) कुबेरस्य भीमस्य च संवादप्रसङ्गे नेपथ्ये भीमान्वेषिणां युधिष्ठिरादीनां ध्वनिः श्रूयते। ततः कुबेरः स्वयं महाराजं युधिष्ठिरं प्रत्युद्गत्य पश्यति सर्वेषां मेलनं भवति। युधिष्ठिरस्य हृदये भयजनितं दुःखं आसीत् तत्तु भीमं विलोक्य विनिवृत्तम्। युधिष्ठिरः ससम्भ्रममुपसृत्य साञ्जलिः कुबेरं प्रत्याह यत् "पर्युत्सुको न लभते निजमुत्तमाङ्गं त्वत्पादपीठमपि लम्भयितुं महेन्द्रः। अर्धासनार्हमसि मित्त्रममुष्य शम्भोः प्रत्युद्गमस्तदिह ते मयि किं नु योग्यः। (सौ. ह. १३७ पृ. ७६) ततः परस्परं दर्शनान्तरं कुबेरः युधिष्ठिरं श्लाघयति नकुलसहदेवौ महाभागौ भरतकुलधुरन्धरौ भूयास्तामित्याशिषा वर्धयति। अत्रावसरे सौगन्धिकादि द्रौपद्याः कर्णाभरणीकर्तुं इच्छता त्वया समरश्लाघ्यं यशः दिशां कर्णाभरणं

कृतमिति भीमं प्रति विहस्य वदति कुबेरः। कुबेराज्ञया कञ्चुकी सौगन्धिकानि आनयति कुबेरस्तान्यादाय भीमाय ददाति भीमः द्रौपद्याः पाणावर्पयति। नेपथ्ये पुष्पवृष्टिः भवति। तदा सहदेवो वदति अहो कुबेर इव भगवान् पुरन्दरः इन्द्रोऽपि अस्माननुमोदते। कुबेरोऽपि एवमेतत् इत्याह "सौगन्धिकार्थं विहितं विमर्दमालोक्य यक्षेषु वृकोदरेण। मन्दारपुष्पाण्यमुना मिषेण प्रायेण भीताः प्रकिरन्ति देवाः। (सौ. ह. १४३, पृ. ८२) युधिष्ठिरोऽपि भीममभिनन्दति धनपतिप्रसादसुलभेन सौगन्धिकाभ्युदयेन। कञ्चुकी दुर्लभतां धनपतिप्रसादं वर्णयन् आह-

**हरति न मृदुवायुर्येभ्यो रजोऽपि यदाज्ञया**
**परिमलमतो घ्रातुं येषां त्रसन्त्यपि षट्पदाः।**
**पुरहरसुहृद् दत्ते सौगन्धिकानि स तानि वः**
**तदिह भवतां माहाभाग्यं किमप्यतिमानुषम्॥** (सौ. ह. १४४, पृ. ८२)

समाप्तौ भरतवाक्यमस्ति तद्यथा –

**राजानः परिपालयन्तु सततं न्याय्येन गां वर्त्मना**
**मर्यादानतिलङ्घिनश्च सुचिरं दीव्यन्तु वर्णाश्रमाः।**
**किं चाऽन्यत् प्रतिभाप्रकाशसुलभा साऽनन्तसंविन्मयी**
**स्वैरं वक्त्रसरोरुहेषु विदुषां वाग्देवता वर्तताम्॥** (सौ. ह. १४५, पृ.८३)

इति निष्क्रान्ताः। समाप्तमिदं सौगन्धिकाहरणं नाम प्रेक्षणम्। सौगन्धिकाहरणं व्यायोगः अथवा प्रेंक्षणम्।

विश्वनाथः साहित्यदर्पणे व्यायोगस्य लक्षणं निम्नरुपेण कथयति यथा – ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः। हीनो गर्भविमर्शाभ्यां नरैर्बहुभिराश्रितः। एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः। कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः। राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः।

हास्यश्रृङ्गारशान्तेभ्य इतरेऽगङ्गिनो रसाः। (सा.द.६/२३१-२३३)। यथा – सौगन्धिकाहरणम्। अनेन प्रकारेण व्यायोगस्य लक्षणं निरूप्य तदुदाहरणत्वेन सौगन्धिकाहरणं स्वविरचित निर्दिशति। सौगन्धिकाहरणस्य वृत्तं महाभारतस्य वनपर्वणः गृहितमस्ति। नायकः प्रख्यातः धीरोद्धतः भीमसेनः। हनूमान् कञ्चुकी, युधिष्ठिरः, नकुलः, सहदेवः इति पुरुषपात्रबाहुल्यमस्ति स्त्रीपात्रं एकमात्रं द्रौपदी, यक्षैः सह समरः। संग्रामश्च सौगन्धिकनिमित्तः। अत्र आरभटीवृत्तिः। अद्भुतः वीरश्च प्रधानतया रसः आस्वाद्यते। इत्थमत्र व्यायोगलक्षणार्न घटन्ते।

इदमत्र विचारणीयं यत् डॉ. दशरथ ओझा इत्याख्येन विदुषा “हिन्दी नाटक उद्भव और विकास” इति ग्रन्थे ‘उपरूपकों के एकांकी’ इति शीर्षकनिबन्धे प्रेंखणमित्यस्य प्रेक्षणकमिति अर्थमादाय सौगन्धिकाहरणं प्रेंखणमुपरूपकं गणितम्। परन्तु यथा प्रेंखणस्य लक्षणं उपलभ्यते तदत्र लक्षितं न भवति। प्रेंखणलक्षणं किमस्ति इति जिज्ञासायां विश्वनाथः आह – गर्भविमर्शरहितं प्रेङ्खणं हीननायकम्। असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम्। नियुद्धसम्फेटयुतं सर्ववृत्तिसमन्वितम्। नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना॥ (सा. द. ६/२८६-२८७ पृ. ५७८) यथा वालिबधम्। एवमत्र प्रेंखणलक्षणमभिधाय साहित्यदर्पणे वालिवधम् उदाहरणत्वेन कथितम्। प्रेंखणस्य हीननायकम्, असूत्रधारम् इत्यदिलक्षणं सौगन्धिकाहरणे नैव सङ्घटते। अतः नेदं प्रेंखणमपि तु व्यायोग इति सुस्पष्टं लक्षणकारैः। डॉ.ओझामहोदयस्य साहित्यदर्पणोक्तानि लक्षणानि तदुदाहरणत्वेन सौगन्धिकाहरणस्य व्यायोगत्वेन गणना लक्ष्ये नागता प्रतीयते। पुष्पिकाणां प्रेक्षणकशब्देन प्रेंखणप्रकालगणना तैः कृता प्रतीयते। अत्रावसरे इदमपि वक्तव्यं भवति यत् आचार्यहेमचन्द्रेण काव्यानुशासने दृश्यकाव्यस्य प्रेक्ष्यमिति संज्ञा कथितास्ति। अतः दृश्यार्थे प्रेक्षणकशब्दस्य उपादानं सम्भवति।

डॉ. कीथ अपि संस्कृतड्रामा इत्याख्ये स्वीये पुस्तके सौगन्धिकाहरणस्य व्यायोगत्वेन स्मरणं कुरुते।

इत्थमत्र विमर्शेन सौगन्धिकाहरणव्यायोगस्य व्यायोगत्वं तत्स्वरूपं सुचारु रसमयं वृत्तमनुभूयते। आस्वादनीयं सहृदयैरिदं सौगन्धिकाहरणं विश्वनाथविरचितमुत्तमं ग्रन्थरत्नं प्रतिभाति।

## संदर्भग्रन्थाः


- काव्यमीमांसा, व्याख्याकारः डो. यमुनारामत्रिपाठी, प्रकाशकः शारदासंस्कृतसंस्थानं वाराणसी, ई.स. 1996.
- मालविकाग्निमित्रम्
- नाट्यशास्त्रम्, सं.पा. पं बटुकनाथशास्त्री, प्रकाशकः - चौखम्भासंस्कृतसंस्थानम्, वाराणसी,द्वितीयं संस्करणम्, ई.सं. 1980.
- दशरूपकम्, सं. पा. डो. भोलानाथव्यासः, प्रकाशकः - चौखम्भा विद्याभवनम्, वाराणसी, ई.स. 2011 (पुनर्मुद्रितसंस्करणम्)
- संस्कृतसाहित्येतिहासः, सं.पा. आचार्यरामचन्द्रमिश्रः, प्रकाशकः - चौखम्भा विद्याभवनम्, वाराणसी, संस्करणम् - 2007.
- साहित्यदर्पणः, सं.पा. आचार्यशेषराजरेग्मी, प्रकाशकः - चौखम्बा कृष्णदास अकादमी, वाराणसी, संस्करणम् ई.स. 2013.
- सौगन्धिकाहरणम्, सं.पा. श्री.पं. कपिलदेवगिरिः, प्रकाशकः - चौखम्भा विद्याभवनम्, वाराणसी, वि.सं. 2019.
- नाट्यसाहित्यमाला, भागः-1, सं.पा. विजययोगतिलकसुरीश्वराः, प्रकाशकः वीरशासनम्, भाभर, जि. बनसकांठा, गुजरात, वि.सं. 2065.
- काव्यानुशासनम्, सं.पा. डो. तपस्वी नान्दी, प्रकाशकः हेमचन्द्राचार्य उत्तरगुजरात युनिवर्सिटी, पाटण, ई.स. 2007.


~~~~~~~~~~~
~~~~~~~~~~~

# उत्तररामचरिते स्त्रीधर्मः

**प्रो. अर्चना दुबे**
अध्यक्षा, संस्कृतविभागः
राँचीविश्वविद्यालयः, राँची

संस्कृतसाहित्ये को नाम पदवाक्यप्रमाणज्ञस्य भवभूतेरभिधानं न वेत्ति। यस्माद्धि भवभूतिः संस्कृतवाङ्मये कश्चन विशिष्टः कविः यः करूणरसमेवैकम्मन्यमानः विराजते। "कारुण्यं भवभूतिरेव तनुते" इत्यादिभिर्वाक्यैः सर्वेऽपि तन्महिमानं निगदन्ति। अस्मिन् शोधपत्रे तस्य महाकवेरनुसारं स्त्रीधर्मः, तस्य च उत्कृष्टता मयाऽत्र प्रत्यपादि। भवभूतिः स्त्रीधर्मस्य मर्यादामपि सम्यक्तया वेत्ति। स्वीये उत्तररामचरिते सः बहून् स्त्रीधर्मसम्बद्धान् श्लोकान् जग्रन्थ। तेषाम् अत्र विवेचनं कृतम् अस्ति।

अन्येषां सर्वेषां धर्माः तु न तथा काठिन्यम् आवहन्ति यथा स्त्रीधर्मः काठिन्यम् आवहति यतो हि एका एव स्त्री कन्याधर्मं अनुतिष्ठति, सा एव पत्नीधर्मं परिपालयति, मातृधर्मं काठिन्येन पालयन्ती अपि सा आनन्दमेवानुभवति। पुनः सा एव स्त्री श्वश्रूः भवति वध्वाः कृतेऽपि तस्याः धर्मः भिन्नः भवति। एतत्सर्वमपि केवलम् एका स्त्री एवा अनुष्ठातुं शक्नोति। स्त्रीधर्मं परिपालयन्त्यो भारते बह्व्यो नार्यः प्रसिद्धिं जग्मुः तासु सीतायाः अप्रतिमं स्थानम् अस्ति सीतायाः स्त्रीधर्मम् अनुतिष्ठन्त्याः सम्यक् चित्रणं भवभूतिना स्वीये उत्तररामचरिते कृतमस्ति। तया अथ च कौशल्याप्रभृतिभिः स्त्रीभिः अनुष्ठितस्य स्त्रीधर्मस्य सम्यक् निरूपणं भवभूतेः उत्तररामचरिते समवाप्यते तस्य एकैकशः निरूपणम् अत्र क्रियते।

**कन्यात्वेन स्त्रीधर्मः-**

स्त्री कयोश्चित् दम्पत्योः कन्या भवत्येव। तस्याः कन्यात्वेन कः धर्मः इति भवभूतिः सम्यक् निरूपितवान्। यथा सीता जनकस्य तनया जनकं प्रति

कीदृशम् आदरं प्रदर्शयति यद्रामभद्रस्य राज्याभिषेके आगतः जनकः यदा विदेहान् गच्छति तदा सीता निर्विण्णा जायते यथोक्तमुत्तररामचरिते –

**स्नेहात्सभाजयितुमेत्य दिनान्यमूनि नीत्वोत्सवेन जनकोऽद्य गतो विदेहान्।**
**देव्यास्ततो विमनसः परिसान्त्वनाय धर्मासनाद्विशति वासगृहं नरेन्द्रः।।**[१]

कन्या तु सर्वदा पितरि श्रद्धावती भवति पुत्रास्तु न तथा पितरि श्रद्दधाना भवन्ति। इयं सीताऽपि तथैव जनकस्य प्रेम्णा जनके विदेहेषु गते सति विमनस्का जायते। स्त्रीणामेष स्वभावः एव भवति। न केवलं स्वभावमात्रम्, तासां धर्मः अपि तादृश एव भवति यत् परगृहं गते सत्यपि पितरि श्रद्धा तु अवश्यम् एव ताभिः कर्त्तव्या। तं सीता सम्यगनुतिष्ठन्ती दृश्यते।

**पत्नीत्वेन स्त्रीधर्मः –**

पत्नीत्वेन तस्याः एव स्त्रियः धर्मः भिन्नः भवति, यत्किमपि भवेत् पत्युः अपयशः भवेत् तादृशं किमपि तया न अनुष्ठेयम्। न केवलं तावदेव परिजनैः सह सस्नेहं तया भाव्यम् इत्थं तया बहवो नियमभूताः धर्माः परिपालनीयाः भवन्ति। पत्नी पत्युः सुखस्य दुःखस्य वा एकरूपतया भोक्त्री भवति। पत्युः हृदयस्य विश्रामभूता भवति। यथोक्तम् -

**अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्**
**विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः।**
**कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थितं**
**भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते ॥**[२]

दम्पत्योः प्रणयः दाम्पत्यसूत्रभूतो भवति। तस्य च प्रणयस्य चरमा परिणतिः भवति सन्ततिप्राप्तिः। भवभूतिः पतिपत्न्योः प्रेम्णः सूत्रं सन्ततिं मनुते। सन्ततिः प्रेम्णः बन्धने आनन्दरूपो ग्रन्थिः कथ्यते।

---

[१] *उत्तररामचरितम् १/७*

[२] *उत्तररामचरितम् – १/३९*

**अन्तः करणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।**
**आनन्दग्रन्थिरेकोऽयमपत्यमिति पठ्यते ॥**[३]

भवभूतिः पतिपत्न्योः उदात्तं निःस्वार्थं च प्रेमभावं व्याख्यायमानः कथयति यत्- प्रियः किमपि न कुर्वाणोऽपि अन्यस्य प्रियस्य कृते अमूल्यो निधिः वर्त्तते। प्रियसान्निध्यमात्रेण सर्वाण्यपि दुःखानि नश्यन्ति।

**न किञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।**
**तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥**[४]
**आविवाहसमयाद् गृहे वने शैशवे तदनु यौवने पुनः।**
**स्वापहेतुरनुपाश्रितोऽन्यया रामबाहुरुपधानमेष ते ॥**[५]

यदा रामः लोकापवादात् सीतां वनं प्रेषयति तदा सः स्वमात्मानं चाण्डालं विषवृक्षं च कथयति। तथा सीताचरणयोः शिरः संस्थाप्य भृशं रोदिति। यथा – **"सीतायाः पादौ शिरसिकृत्वा अयं पश्चिमस्ते रामः शिरसा पादपङ्कजस्पर्शः ( इति रोदिति )।**[६]

रामः लोकानुरञ्जनाय [७] सीतां त्यक्तवान्। यदा सः शम्बूकं हन्तुं पञ्चवटीं गच्छति तदा सीतां संस्मरन् मूर्च्छितो भवति।

**दलति हृदयं गाढोद्वेगं द्विधा तु न विद्यते**
**वहति विकलः कायो मोहं न मुञ्चति चेतना।**
**ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्**
**प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम्।**[८]

---

[३] *उत्तररामचरितम् – ३/१७*

[४] *उत्तररामचरितम् – २/१९*

[५] *उत्तररामचरितम् – १/३७*

[६] *उत्तररामचरितम् – पृ.सं. ११२*

[७] *स्नेहं दयां च सौख्यं च यदि वा जनकीमपि ।*
*आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा । उत्तररामचरितम् – १/१२*

[८] *उत्तररामचरितम् – ३/३१*

सीतां विना स्वस्य जीवनं शून्यमात्मानं च भाग्यहीनम्मन्यमानः विलपन् मूर्च्छितो भवति। यथा –

**हा हा देवि ! स्फुटति हृदयं ध्वंसते देहबन्धः**
**शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि।**
**सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा**
**विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥**[९]

रामसीतयोः परस्परम् अत्यन्तं प्रेम वर्त्तते। सीता रामं नोपालम्भते किन्तु आत्मानमेव अपराधिनीं मनुते। अत्रैव तस्याः स्त्रीधर्मस्य उत्तमा उपलब्धिर्दृश्यते यथा **"हा धिक् हा धिक् मां मन्दभागिनीं व्याहृत्यामीलितनेत्रनीलोत्पलो मूर्च्छित एव"**।[१०] पत्न्याः एतादृशं धर्मं केवलं सीता एव निर्वोढुं शक्नोति यस्य च सम्यक् निदर्शनं भवभूतिः उत्तररामचरिते कारयति।

तथैव रामे मूर्च्छिते सति सीता अश्रूणि मुञ्चन्ती स्वस्पर्शेन रामं चेतनीचिकीर्षति। अन्येषु जन्मसु रामस्य दर्शनं पुनरसम्भवं दुर्लभं च मनुते। यथा – **" किमिति वज्रमयी जन्मान्तरेष्वपि पुनरप्यसम्भावितदुर्लभदर्शनस्य मामेव मन्दभाग्यामुद्दिश्यैवं वत्सलस्यैवंवादिन आर्यपुत्रस्योपरि निरनुक्रोशा** भ**विष्यामि। अहमेवैतस्य हृदयं जानामि ममैषः**।[११] एतादृशानि दुःखानि सहन्ती अपि सीता राममेव प्रत्येकस्मिन् जन्मनि पतित्वेन वाञ्छति एतदेवास्ति वैशिष्ट्यं स्त्रीणाम्।

---

*[९] उत्तररामचरितम् – ३/३८*

*[१०] उत्तररामचरितम् – गद्यभागः*

*[११] उत्तररामचरितम् – ३ गद्यभागः*

रामसीतयोः दाम्पत्यं गाढं निर्बाधञ्चास्ति अतः सीता अश्वमेधयज्ञे स्वर्णमूर्त्याः[१२] वृत्तान्तं ज्ञात्वा प्रसन्ना वाष्पपूरितलोचना भवति। रामसीतयोः परस्परम् एकनिष्ठम् अनितरसाधारणं प्रेम दाम्पत्यस्य चरमोत्कर्षं प्रकटयति।

**मातृत्वेन स्त्रीधर्मः -**

सीता स्वपुत्रौ कुशलवौ अनन्यतया प्रीणाति। सा च वात्सल्यमूर्त्तिरस्ति अतः स्वार्थं परित्यजन्ती पुत्रौ शिक्षायां पारंगतौ भवेताम् इति प्रकल्प्य स्वस्माद्दूरे वाल्मीकेराश्रमे तौ स्थापयति। सीता हस्तिकलभकम् अवलोक्य कुशलवौ स्मरति। तदानीं सा तमसां प्रति कथयति अयं कलभकः एतावान् वर्धितः न वेद्मि एतावत्सु दिवसेषु मे कुशलवावपि कियन्तौ वर्धितौ स्याताम्। सा स्वां मन्दभागिनीं कथयति। यस्याः न केवलं पतिविरहः अपितु पुत्रविरहोऽपि अस्ति। यथा **"ईदृश्यस्मि मन्दभागिनी, यस्याः न केवलमार्यपुत्रविरहः, पुत्रविरहोऽपि"।** मातृस्नेहस्तु सर्वदा प्रसिद्ध एव। तस्य मातृप्रेम्णः भवभूतिः सम्यक् निरूपणम् अकार्षीत्।

**वधूत्वेन श्वश्रूत्वेन वा स्त्रीधर्मः -**

उत्तररामचरिते वधूपात्रं श्वश्रूपात्रं चेत्युभयम् उपलभ्यते उभयोरपि धर्मनिरूपणपुरस्सरं ग्रथनं भवभूतिः उत्तमतया कृतवान् तद्यथा - सीतायाः तिस्रः अपि श्वश्र्वः तस्यां स्नेहातिरेकं दर्शयन्ति। तथैव भवितव्यम् अपि वधूः श्वश्रूं प्रति मातृभावं श्वश्रूः च वधूं प्रति पुत्रीभावं प्रदर्शयेत्। एतदेव अनुकुर्वत्यः सीतायाः तिस्रः अपि श्वश्र्वः अष्टावक्रेण सह ऋष्यशृङ्गाश्रमं गताः अपि ततः सीतायाः गर्भदोहदं नाम तस्याः प्रत्येकाम् इच्छां पूरयितुं रामं प्रति सन्देशं प्रेषयन्ति। अथ च सीतायाः निर्वासनसन्देशं श्रुत्वा पुनरयोध्यामपि गन्तुं ताः नेच्छन्ति। रामं प्रति च स्वीयान् रोषभावान् प्रकटयन्ति।

कौशल्या नवविवाहितायाः सीतायाः मुखमण्डलं स्मरन्ती कथयति – **"हा वत्से जानकि! कुत्रासि? स्मरामि ते नवविवाहलक्ष्मीपरिग्रहैकमण्डनं**

---

[१२] *हिरण्यमयी सीताप्रतिकृतिः । उत्तररामचरितम् – २*

**प्रस्फुरच्छुद्धविहसितं मुग्धमुखपुण्डरीकम्, आस्फुरच्चन्द्रिकासुन्दरैरङ्गैरुल्लासय, जाते, पुनरप्युद्योतयोत्सङ्गम् , सर्वदा महाराजो भणति एषा रघुकुलमहत्तराणां वधूरस्माकं तु जनकसम्बन्धेन दुहितैव" ।**[१३]

न केवलमधिराज्ञी कौशल्या एव अपितु महाराजदशरथोऽपि सीतायां पुत्रीवत् स्निह्यति। दशरथः सीतां रघुकुलस्य पूर्वजानां पुत्रवधूं तथा स्वात्मनः पुत्रीं कथयति यथा – "एषा रघुकुलमहत्तराणां वधूरस्माकं तु जनकसम्बन्धेन दुहितैव" । यथा दशरथस्य पञ्चस्वपत्येषु सुबाहुशत्रुः रामः प्रियः आसीत् तथैव चतसृषु वधूषु सीता एव पुत्रीवत् प्रिया आसीत्।

**पञ्चप्रसूतेरपि तस्य राज्ञः प्रियो विशेषेण सुबाहुशत्रुः ।**
**वधूचतुष्केऽपि यथैव शान्ता प्रिया तनूजाऽस्य तथैव सीता ॥**[१४]

कौशल्या तु सीतानिर्वासने आत्मानमेव कारणं मत्वा कथयति – **"कथं नु खलु वत्साया मे वध्वा एवं गते तस्य राजर्षेः मुखं दर्शयामः" ।**[१५] एतादृशानि स्नेहभावयुतानि धर्मपालकानि पात्राणि रामायणे एव उपलभ्येरन् अथ च तेषां एतादृशं भावुकं निरूपणं भवभूतिरेव कर्त्तुं शक्नोति।

**पितामहीत्वेन स्त्रीधर्मः –**

पितामही च स्वपुत्रपुत्र्योरपेक्षया पौत्रेषु दौहित्रेषु च अधिकं स्निह्यति। कौशल्यापि पौत्रयोः अत्यन्तं स्निह्यति। अतः कौशल्या यदा बालसमूहे लवं प्रथमवारं पश्यति तदा तस्मिन् रामस्य एव प्रतिकृतिं पश्यति। कौशल्या तं चक्षुषोः अमृताञ्जनमिव मनुते। लवे अङ्के आरोपिते सति तस्य कमलकोमलस्पर्शः रामस्पर्शवदेव प्रतीयते स्म। यथा -

**कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनो**
**वटुपरिषदं पुण्यश्रीकः श्रियैव सभाजयन्।**

---

[१३] *उत्तररामचरितम् – ४ गद्यभागः*

[१४] *उत्तररामचरितम् – ४/१६*

[१५] *उत्तररामचरितम् – ४ गद्यभागः*

**पुनरपि शिशुर्भूत्वा वत्सः स मे रघुनन्दनः**
**झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥**[१६]

कौशल्या यदा हनुना मुखमुन्नीय लवं पश्यति। तदा तन्मुखे सीतायाः मुखाकृतिं दृष्ट्वा तस्याः नेत्रे अश्रुपूर्णे भवतः।

**सम्बन्धिधर्मः –**

उत्तररामचरिते कौशल्याजनकयोः योगः भवति तत्र एतदवलोक्यते यदेकस्याः नार्यः स्वसम्बन्धिनं प्रति कीदृशः भावः भवेत् – यथा कौशल्या जनकम् अवलोक्य महद्दुःखम् अनुभूयमाना भवति। यथा कश्चिद्दुःखितो जनः सम्बन्धिनं गृहसदस्यं वा दृष्ट्वा स्वीयं दुःखं गोपितुं समर्थः न भवति तथैव जनकस्यागमनस्य सूचनाम् अवाप्य सा स्वयं चेतनाम् आप्तुम् असमर्था भवति। यथा -

**सन्तानवाहीन्यपि मानुषाणां दुःखानि सम्बन्धिवियोगजानि।**
**दृष्टे जने प्रेयसि दुस्सहानि स्रोतस्सहस्रैरिव सम्प्लवन्ते ॥**[१७]

न केवलम् एतावदेव सीतायाः रामस्य च इतोऽपि सम्बन्धः आसीत् सीतायाः ननान्दरदं प्रत्यपि मधुरः व्यवहारः आसीत् यथा ऋष्यश्रृङ्गस्य आश्रमादष्टावक्रः यदा आयाति तदा सीता गुरुजनानां मातृणां च कुशलं पृष्ट्वा शान्तायाः विषये पृच्छति। अपि स्मरति ननान्दा शान्ता अस्मान् ? इति। रामः ऋष्यश्रृङ्गस्य शान्तायाः च कुशलं पृच्छति यथा -**"निर्विघ्नः सोमपीथी आवुत्तो मे भगवानृष्यश्रृङ्ग आर्या च शान्ता।**[१८]

ननान्दुः पत्या अपि सीतायाः स्थितिं दृष्ट्वा रामः सीतायाः मनोरञ्जनाय आदिष्टः। सीतायाः कृते पुत्रवत्याः आयुष्मत्याश्च आशीर्वचननानि च दत्तानि। यथा -

---

[१६] *उत्तररामचरितम् – ४/१९*

[१७] *उत्तररामचरितम् – ४/८*

[१८] *उत्तररामचरितम् – १/ गद्यभाग*

**अष्टावक्रः – ननान्दुः पत्या च देव्याः सन्दिष्टमृष्यश्रृङ्गेण वत्से कठोरगर्भेति नानीतासि। वत्सोऽपि रामभद्रस्त्वद्विनोदार्थमेव स्थापितः। तत्पुत्रपूर्णोत्सङ्गामायुष्मतीं द्रक्ष्याम इति।**[१९]

इत्थमेव भवभूतेः अस्यां कृतौ इतोऽपि बहवः स्त्रीधर्मविषयकाः बिन्दवः निर्दिष्टा उपलभ्यन्ते। भवभूतेरियं कृतिः अस्मान् मानवीयमूल्यानि शिक्षयति। उत्तरं रामचरितम् अनया दृष्ट्या सेवमाना वयं नूनं मानवीयमूल्यवन्तः भवेम।



[१९] *उत्तररामचरितम् – १/ गद्यभाग*

# महाकविकालिदासस्य रूपकेषु रसनिरूणम्

**डॉ. महेन्द्रकुमार अं. दवे**

प्राचार्यः,

सी.बी.पटेल-विनयनमहाविद्यालयः, नडियाद

जीवनस्य धर्मः आनन्दोऽस्ति नायं रस आनन्दाद् व्यतिरिच्यते, रस्यते आस्वाद्यते इति रसः। प्राणभूतः सकलोऽपि व्यापारो रसाभिलापमूलः न केवलं काव्यकलापे व्यवहारजगत्यपि च प्राणभूतां रसमुद्दिश्यैवाहार बिहारादिप्रवृत्तिः जायते। आनन्दमभिलक्ष्यैव विषयेष्वभिनिवेशः भवति एतस्मात् एवं हेतोः काव्यजनित आस्वादोऽपि रस एव तस्य स्वरूपं हि न ब्रह्मणो रूपाद् भिन्नम् उक्तञ्च आचार्यविश्वनाथेन स्वकीये साहित्यदर्पणे यत्-

**सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मया।**
**वैद्यान्तरस्पर्शशून्यो ब्रह्मास्वाद सहोदरः॥**
**लोकोत्तरचमत्कारप्राणः केचित् प्रमातृभिः।**
**स्वाकारवद भिन्नत्वेनायमात्वाद्यते रसः॥**[१]

अग्निपुराणे आनन्दः परब्रह्मसहोदरः एवं आनन्दस्याभिव्यक्तिश्चैतन्य-चमत्कारो वा रस इत्युच्यते[२] काव्यमीमांसाकारो राजशेखरो रससंप्रदायस्य संस्थापकं नंदिकेश्वरं यस्य भरतादपि प्रनतरत्वं मतं स्वीकरोती। साहित्यशास्त्रस्येतिहासकाराः परं गन्धिकेश्वरकृतस्य कस्याप्यनुपलब्धत्वाद् भरतमेव रसस्याद्यमाचार्यस्वीकुर्वन्ति। रसो निराकारः काव्यं हि तस्यास्त्याकारः। कवि आत्मानं प्रकटीकर्तुं काव्यं सृजति सः काव्ये शब्दार्थौ सुधामयौ कृत्वावतारयति। दशरूपके धनञ्जयः कथयति यत्-" रसैः विना

---

[१] *साहित्यदर्पणम् - 3/2*

[२] *अग्निपुराणे – 339/1-8*

रूपकाणां परमानन्दरूपता कदापि न सिद्ध्यति। "शृङ्गाराद्धास्य, रौद्रात्करुणः, वीराददद्भुतः, बीभत्साद्भयानकञ्चोत्पद्यते इति नाट्यशास्त्र- शृङ्गारतिलकादिषु प्रतिपादितम्।[3] एषु रसेषु महाकाव्ये शृङ्गारवीरयो रन्यतरः प्रधानो भवेदिति, अन्ये रसाः अगरसाः भवेयुरिति न बहवः आलङ्कारिकाः प्रत्यपादयन्। साहित्यदर्पणकारश्शान्तस्यापि प्राधान्यमङ्गीचकार शृङ्गारस्य रतिः हास्यस्य हासः, करुणस्य शोकः, वीरस्योत्साहः, भयानकस्य भयं बीभत्सस्य जुगुप्सा, रौद्रस्य क्रोधः, अद्भुतस्य विस्मयः, शान्तस्य शमश्च स्थायिभावाः भवन्ति एते स्थायिनो भावात्सामाजिकानां मनस्तु वासनारूपतायाता वर्तमाना स्सन्तो विभावादिभिः पोष्यमाणाः रसतामाप्नुवन्ति एते च सजातीयैर्विजातीयैश्च भावैरतिस्कृत-स्वरूपास्सन्तस्सामाजिकानां हृदयेषु रसानुभूतिपर्यन्तमवतिष्ठन्ते

१. मालविकाग्निमित्रे रसनिरूपणम्:- मालविकाग्निमित्रे मुख्यरसः शृङ्गारो वर्तते गौणतया अत्र हास्यरसोऽपि दृश्यते। अन्येषां रसानाम् अभावो वर्तते यतः महाकवेः प्रथमं नाटकं स्यात् अत्र द्वावपि संयोगविप्रलम्भशृङ्गारौ वर्णितौ स्तः। तत्रस्य विप्रलम्भः यथा-

**शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे-**
**भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति।**
**तया सारङ्ग्या त्वमसि न कदाचिद्विरहितं-**
**असते निर्वाण हृदय परितार्य महसि किम्॥**[4]

अत्र राज्ञः हृदयं प्रति उक्तौ मालविकायाः प्रियतमवियोगे कृशत्वं तेन च विप्रलम्भशृङगारोऽभिव्यज्यते इति तथा तृतीयाङ्के प्रियतमस्य अप्राप्ती जीवन व्यर्थम् अनुभवती मालविका विप्रलम्भशृङ्गारोत्कर्षं जनयति। संयोगशृङ्गारः यथा-

---

[3] *शृङ्गाराद्धि भवेद् हास्यो रौद्राश्च करुणो रसः।*
*वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानकः।। नाट्यशास्त्रम् - ६-४०*

[4] *मालविकाग्निमित्रे – ३/१*

**त्वदुपलभ्य समीपदतां प्रियां हृदयमुच्छ्वसितं मम विमलवम्**
**तरुवतां पथिकस्य जलार्थिनः सरितमारसितादिव सारसात्॥** [५]

अत्र मालविका प्राप्ती राज्ञः व्याकुलहृदयस्य शान्तत्वं संयोगश्रृङ्गारं सूचयति द्वितीया मालविकावर्णने श्रृङ्गारो दृश्यते यथा-

**वामं सान्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे-**
**कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम्**
**पादागुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं**
**नृत्तादस्याः स्थितमतितरां कान्तामृज्वायतार्थम्॥**[६]

यथा वा-

**हस्तं कम्पवती रूणद्धि रशना व्यापार लोलाङ्गुलि -**
**हस्तौ स्वौ नयति स्तनावरणतामालिङ्ग्यमाना बलात्।**
**पातुं पक्ष्मलचक्षुरून्नमयतः साचीकरोत्याननं-**
**व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तत्येव मे॥**[७]

इत्थमनेकेषु स्थलेषु श्रृङ्गारोऽभिव्यज्यते अत्र राज्ञः मालविकायाश्च हृदये परस्परं प्रीतिः रतिः स्थायीभावोऽस्ति द्वावपि परस्परमालम्बनविभावौ स्तः तृतीयाङ्के वसन्तवर्णनादयः प्रसङ्गाः उद्दीपनविभावासन्ति द्वयोः चेष्टा अनुभावः अवस्था च व्यभिचारिभावः वर्तते।

एतदतिरिच्य हास्यरसः अपि सरल तथा सुन्दरः वर्तते यथा विदूषकस्य उक्ती "भवति पश्याम उरभ्रसंपातम् किं मुधा वेतनदानेन?[८] तथा सुष्ठु भवती भणति। भोः गणदास संगीतोपदेशेन सरस्वत्युपायन-

---

[५] *मालविकाग्निमित्रे – ३/६*
[६] *मालविकाग्निमित्रे – २/६*
[७] *मालविकाग्निमित्रे – ४/१५*
[८] *मालविकाग्निमित्रे द्वितीयाङ्के*

मोदकान्खादतः किं ते सुलभ - निग्रहेण विवादेन[९] तथा सर्पदंशप्रसङ्गेऽपि[१०] विदूयकः सुन्दरं हास्यं जनयति।

इत्थं हि मालविकाग्निमित्रे महाकविना सफलप्रेक्षकाणां मनोहारि च रसाभिव्यजनं कृतं वर्तते इति

२. विक्रमोर्शीये रसनिरूपणम्-

विक्रमोवर्शीये महाकविना अधिकाः रसाः न प्रयोक्ताः तथापि मालविकाग्निमित्रादधिका रसव्यञ्जना अत्र दृश्यते। अस्य त्रोटकस्य मुख्यरसः संयोगश्रृङ्गारः गौणरसाः विप्रलम्भश्रृङ्गार-वीराङ्गभूताः अत्र वर्णितास्सन्ति। रसपरिपाकदृष्ट्या अस्मिन् त्रोटके कालिदासस्य तादृग् नैपुण्यं न दृश्यते यादृग् अभिज्ञानशाकुन्तले तथा अत्र प्रसङ्गयोजना अपि क्वचित् रसास्वादे हानि करोति तथापि त्रोटकमिदं जगति लब्धप्रतिष्ठं वर्तते।

अत्र प्रथमाङ्के उर्वश्याः रक्षणे राज्ञः पराक्रमेण वीररसः अभिव्यज्यते। प्रारम्भे एव वीर पराक्रमत्वात् सा उर्वशी तस्मिन् राजनि आकर्षिता भवति। स्वर्गगमनावसरे उर्वश्याः राजानं प्रति दृष्टिः श्रृङ्गारभावं प्रकटयति राज्ञा उर्वशीं प्रति उक्तानि वचांसि राज्ञः मनसि स्थितरतेः भावं दर्शयन्ति चतुर्थाके उर्वश्यां लतायां जातायां सत्यां राज्ञः दशा विप्रलम्भश्रृङ्गारं प्रकटयति। यथा-

**"तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति-**
**स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः॥**
**तां हर्तुं विबुधद्विषोऽपि न च मे शक्त्याः पुरोवर्तिनीं –**
**सा चात्यन्तमदर्शनं नयनयोर्यातेति कोऽयं विधिः॥''**[११]

---

[९] *मालविकाग्निमित्रे द्वितीयाङ्के*

[१०] *मालविकाग्निमित्रे तृतीयाङ्के*

[११] *विक्रमोवर्शीये – ४-९*

१ अत्र राज्ञः शङ्काः, ताभिः तस्य दुःखञ्चज्ञायते उर्वश्याः अन्वेषणे पुनः राज्ञः इयमुक्तिः वियोगदुःखावस्थां प्रतिपादयन्ति। अत्रैव मणिस्पर्शनान्तरं संयोगश्रृङ्गारः यथा-

**त्वद्वियोगोद्भवे तन्वि मया तमसि मज्जता।**
**दिष्ट्या प्रत्युपलब्धाऽसि चेतनेव गतासुना॥**[१२]

पञ्चमाङ्के नारदसमाचारेण ज्ञायते यत् उर्वशी राज्ञः समीपमेव भविष्यति तस्याश्चपृथिव्यामेव पुरूरवसः समक्षं स्थितिर्भविता। इति चिरं संयोगश्रृङ्गारं दर्शयति। प्रथमाङ्के रथवर्णने[१३] अवरोहति शैलाग्रं तडित्वानिव तोयदः॥ प्रथमाके गन्धर्वचित्ररथस्यागमनेऽपि अद्भुतरसः अभिव्यज्यते। यथा-

**अयञ्च गगनात् कोऽपि तप्तचामीकराङ्गदः।**
**अवहरोति शैलाग्रं तडित्वानिव तोयद।।**[१४]

चतुर्थाङ्केऽपि राज्ञः उर्वश्याः च प्रतिगमने अद्भुतरसस्य प्रतीतिर्भवति। यथा-

**अचिर प्रभा विलासितैः पताकिना सुरकार्मुकाभिनव-चित्रशोभिना।**
**गमितेन खेलगमने विमानतां नय मां नवेन वसतिं पयोमुचा॥**[१५]

इत्थं महाकविकालिदासेन यथावसरं यथा योग्यं रसानामभिव्यञ्जनं कृतं वर्तते इति।

**३-अभिज्ञानशाकुन्तले रसनिरूपणम्-**

---

[१२] *विक्रमोवर्शीये – ४-७१*

[१३] *अग्रे यान्ति रथस्य रेणुपदवीं चूर्णीभवन्तो धनाः*
*चक्रभ्रातिरसन्तरेषु वितनोत्यनयाभिवारावलीम्*
*चित्रन्यस्त भिवाचलं हयशिरस्यायामवच्चामरं-*
*यष्ट्यग्रे च समं स्थितो ध्वजपटः प्रान्ते च वेगानिलात्। विक्रमोवर्शीये – १-५*

[१४] *विक्रमोवर्शीये – १-१५*

[१५] *विक्रमोवर्शीये – ४-१५*

रसव्यञ्जनादृष्टौ अभिज्ञानशाकुन्तलस्य महत्त्वं सर्वोपरि वर्तते। अस्मिन् संयोगः विप्रलम्भश्चेति श्रृङ्गारद्वयम् वर्तते। द्वयोरपि श्रृङ्गारयोः मन्दाकिनी कविना हृदयस्पर्शी प्रवाहिता यस्यां निमज्जनं कृत्वा सहृदयस्य आनन्दातिरेकः सञ्जायते। तथाप्यत्र संयोगश्रृङ्गारः प्रमुखः वर्तते तथा विप्रलम्भश्रृङ्गारःवीरः,अभ्दुतः, करूणः, हास्यः,भयानकः,रौद्रःशान्तश्चेति गौणरसाः सन्ति। केषाञ्चित् मतानुसारमत्र विप्रलम्भस्याधिक्यात् स एव मुख्यः। किन्तु संस्कृतनाटकानां सुधान्तत्वात् ममिदं स्वयमेव दूरीभवति

तृतीयाङ्के सप्तमाङ्के च संयोगश्रृङ्गारोऽस्ति श्रृङ्गारस्य नाटकानि विप्रलम्भयुतानि भवत्येव यतः विभानन्तरमुद्भूतः संयोगश्रृङ्गारः अधिकानन्द दायकः भवति। नाटकसमाप्ति यस्य रसस्य प्रभावः सहृदयहृदये स्थायी भवति स एव मुख्यरसः। अतोऽयं संयोगश्रृङ्गारः एव प्रमुखः इति उचितं प्रतीयते। विप्रलम्भः यथा-

**रम्यं द्दष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते-**
**शय्याग्रान्तविवर्तनैर्विगमयत्युनिद्र एवं क्षपाः**
**दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा-**
**गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम्॥**[१६]

अत्र शकुन्तलावियोगात् खिन्नस्य दुष्यन्तस्य दशां वर्णयन् कञ्चुकी वक्ति राज्ञः विप्रलम्भःअत्र परमचरमोत्कर्षी द्दश्यते सयोगश्रृङ्गारः यथा-

**अपरिक्षतकोमलस्य यावत् कुसुमस्यैव नवस्य षद्वदेन**
**अधरस्य पिपासता त्वया ते सदयं सुन्दरि गृह्यते रसोऽस्य॥**[१७]

---

[१६] *अभिज्ञानशाकुन्तले – ६-५ विक्रमोवर्शीये – १-५*

[१७] *अभिज्ञानशाकुन्तले – ३-२१*

शकुन्तलां पश्यन् तां प्रति दुष्यन्तस्य उक्तिरियम् अत्र स्थितः संयोगश्रृङ्गारः सहृदयानां चेतसि आनन्दमुन्मादयति। श्रृङ्गारनिरुपणे कवेःसाफल्यं पदे पदे दृश्यते। द्वितीयाङ्क विदूषकप्रसङ्गः हास्यरसं जनयति। विदूषकस्य दशा चेष्टाः संवादः तर्कवितर्कादयः निर्मलं हास्यं सूचयति अत एव राज्ञाउक्तं यत्- "पारिहास विजल्पितं सखे! परमार्थेन न गृह्यतां वचः ॥[१८] 18

चतुर्थाङ्कस्य मुख्यरसः करुणः वर्तते अत्र शकुन्तलायाः पतिगृहगमने कण्वस्य वैक्लव्यं कारूण्यं जनयति। यथा-

**यास्यत्यद्यशकुन्तलेति हृदयं संपृष्टमुत्कण्ठया-**
**कण्ठः स्तम्भितबाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।**
**वैक्लव्यं मम तावदीदृशमिदं हादस**
**पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैएनवैः ॥**[१९]

अयं श्लोकः सांसारिकानां मनसि पुत्रीं प्रति किदृक् प्रेम स्यादिति प्रतिपादयति। चतुर्थाङ्क करुणः परमं चरमं प्राप्तः वर्तते।

पञ्चमाङ्के दुष्यन्तशकुन्तलयोः पुनः मेलनार्थं राज्ञः वचोभिः दुःखितायाः शकुन्तलायाः वचनेषु रौद्ररसः दरीदृश्यते राक्षसानां विनाशकरणे प्रथमाङ्कान्ते वीररसः अपि दृग्गोचरीभवति कविना भयानकरसः वर्णितः। यथा-

**ग्रीवाभङ्गाभिरामं मुहुरनुपता स्यन्दनेबद्धदृष्टिः-**
**पश्चार्द्धन प्रविष्टः शरपतनभयात् भूयसा पूर्वकायम्**
**दरबनीः श्रमविवृतमुखभिः कीर्णव**
**पश्योदयुतत्वात् नियति बहुत स्तोमुख्य प्रयाति ॥**[२०]

---

[१८] *अभिज्ञानशाकुन्तले – २-१८*
[१९] *अभिज्ञानशाकुन्तले – ४-५*
[२०] *अभिज्ञानशाकुन्तले – १-७*

चतुर्थाङ्के आकाशवाणीप्रसङ्गे वनदेवतायाः दत्ताभूपणप्रसङ्गे पञ्चमा आप्सरा तीर्थ समीपं शकुन्तलायाः अदृश्यत्वप्रसङ्गे, सप्तमाङ्के स्वर्गात् प्रतिनिर्गमनप्रसङ्गे चादभुतरसस्य परिपाकः दृश्यते सप्तमाङ्के पृथिव्याः दूरं गतः राजा पृथ्वि वर्णयति। यथा-

**शैलानामवरोहतीव शिखरादुन्मज्जताम् मेदिनी –**
**पर्णस्वान्तरलीनतां विजहति स्कन्धोपादपाः।**
**सन्तानैस्तनुभावनष्ट सलिला व्यक्ति भजन्त्यापगाः-**
**केनाप्युत्क्षिपयेव पश्य भुवनं मत्पार्श्वमानीयते॥**[२१]

अत्र स्थितः अद्भुतरसः दर्शकानां मनसि चमत्कारं जनयति। तथैवा सप्तमाङ्कस्य प्रारम्भे दर्शिताः प्रसङ्गा; अद्भुतरसप्रधानाः वर्तन्ते। सप्तमाङ्कान्ते कश्यपऋषेः सान्निध्ये शान्तरसः अनुभूयते। कश्यपाश्रमवर्णने राज्ञः उक्तौ शान्तरसस्य प्रतीतिः सञ्जायते यथा-

**प्राणानामनिलेन वृत्तिरूचिता सत्कल्पवृक्षे वने-**
**तोये काञ्चनपद्मरेणुकपिशे धर्माभिषेकक्रिया**
**ध्यानं रत्नशिलातलेषु विबुधस्त्रीसन्निधौ संयमो**
**यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी॥**[२२]

इत्यमभिज्ञानशाकुन्तले बीभत्सं विहाय विविधारसाः महाकविना अभिव्यक्ताः सन्ति। मालविकाग्निमित्रम् कालिदासस्य प्रथमं नाटकं अतः अत्र अभिज्ञानशाकुन्तलिसदृशं काव्यकौशलं भावगाम्भीर्यं तु नास्ति परन्तु कार्यव्यापारस्य क्षिप्रता, पद्यानां विरलता, स्वाभाविकानां संक्षिप्तानां च संवादानां योजना अभिनेयता च मुख्याः विशेषताः सन्ति। याभिः नाटकेऽस्मिन् रोचकतायाः समावेशो जातः। विक्रमोवर्शीये मुख्यो रसः शृङ्गारः

---

[२१] *अभिज्ञानशाकुन्तले – ७-८*

[२२] *अभिज्ञानशाकुन्तले – ७-१२*

भाषा प्रसादगुणयुक्ता स्वाभाविकैः अलङ्कारैः भूषिता चास्ति इयं कवित्वदृष्टया उत्कृष्टकृतिः वर्तते। अभिज्ञानशाकुन्तले नाट्यशास्त्रीयतत्त्वानाम् औचित्येन समावेशोऽस्ति अत्र नाट्यकलाया भावभूमौ हृदयस्य सरसभावानां स्वाभाविकतया, सरलतया, मौलिकतया च समावेशो वर्तते। सुललिता शब्दसंयोजना, शोभनो वाक्यविन्यासः, हृदयावर्जकः रसपरिपाकः, अकृत्रिमा अलङ्कारयोजना, प्रसादगुणोत्कर्षः, ध्वन्यात्मकता, रुचिवैदर्भी रीतिप्रयोगः, चरित्रचित्रणचारुता च अभिज्ञानशाकुन्तलस्य विशेषगुणाः सन्ति ये अन्यत्र सुदुर्लभाः। अभिज्ञानशाकुन्तलं कालिदासस्य सर्वोत्तमकाव्यम्। अत एवोच्यते बुधैः कालिदासस्य सर्वस्वमभिज्ञानशाकुन्तलम्।

~~~~~~~~~~~
~~~~~~~~~~~

# श्रीधरीटीकानुसारेण श्रीमद्भागवतमहापुराणे प्रथमस्कन्धे प्रोक्ता भीष्मस्तुतिः

**डॉ. पङ्कजकुमारः एस्. रावलः**

सहायकाचार्यः

श्रीसोमनाथसंस्कृतयुनिवर्सिटीसञ्चालित-

संस्कृतकोलेज-वेरावलम्

**प्रस्तावना :**

श्रीमद्भागवतपुराणं श्रीकृष्णद्वैपायनव्यासस्य समाधिभाषा विद्यते अस्माकं पूर्वाचार्यैः प्रमाणप्रस्थानत्रयी कथिता विद्यते तत्र भगवद्गीता – व्याससूत्राणि उपनिषद्ग्रन्थाः इत्येतेषां समावेशो भवति किन्तु जगद्गुरु श्रीमद्वल्लभाचार्येण प्रमाणचतुष्टयमङ्गीकृतं वर्तते। तत्र तैः तत्त्वार्थदीपनिबन्धाख्ये ग्रन्थे प्रोक्तं यथा –

**वेदाः श्रीकृष्णवाक्यानि ब्रह्मसूत्राणि चैव हि।**
**समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम्॥**[१]

बादरायणस्य समाधिभाषाख्ये ग्रन्थे त्रिविधाभाषा प्रयुक्ता वर्त्तते इत्यस्ति विदुषां मतम्। तासु तिस्रासु भाषासु एका व्यावहारिकी भाषा द्वितीया मतान्तरिताभाषा तृतीया समाधिभाषा। पुनश्च श्रीमद्भागवतमहापुराणं दशभिः लक्षणैः गुम्फितं विद्यते, सुशोभितं विद्यते। तेनैव तदस्ति महापुराणम्। अन्यच्च 'भागवत' इत्यस्य व्याख्या द्विधा मिलति तद्यथा-

**भातीदं सर्वलोकेषु गीयते नारदादिभिः।**
**वरिष्ठं सर्वशास्त्राणां तत्त्वं परमगोपितम्॥**

**यत्राधिकृत्यगायत्रीं वर्ण्यते धर्मविस्तरः।**
**वृत्रासुरवधोपेतं तद्भागवतमीष्यते॥**

---

१ *तत्त्वदीपनिबन्धः,*

मत्स्यपुराणे देवीभागवते च क्रमेणेत्थं भागवतशब्दस्य व्याख्या मिलति।

**भागवतस्य संक्षिप्तः परिचयः**

**ग्रन्थोदष्टादशसाहस्रो द्वादशस्कन्धसम्मितः।**
**परीक्षिच्छुकसंवादः श्रृणु भागवतं च तत्॥[२]**

**स्वकीयं यद्भवेत्तेजस्तच्च भागवतेऽदधात्।**
**तिरोधाय प्रविष्टोऽयं श्रीमद्भागवतार्णवम्॥**

**तेनेयं वाङ्मयी मूर्तिः प्रत्यक्षा वर्तते हरेः।**
**सेवनाच्छ्रवणात्पाठाद्दर्शनात्पापनाशिनी॥[३]**

**श्रीमद्भागवताख्योऽयं प्रत्यक्षः कृष्ण एव हि।**
**स्वीकृतोऽसि मया नाथ मुक्त्यर्थं भवसागरे॥[४]**

पद्मपुराणे श्रीमद्भागवतमहापुराणस्य माहात्म्यं प्रस्तुतं विद्यते तथैव स्कन्दपुरणेऽपि चतुर्षु अध्यायेषु एतस्य महापुराणस्य माहत्म्यं प्राप्यते येन भागवतस्य महत्वं परिचयं च सुलभतया अवगन्तुं प्रभवामः।

श्रीमद्भागवतमहापुराणे गद्यं-पद्यम् उभयं विद्यते। पुराणेऽस्मिन् १८,००० सहस्रपरिमिताः श्लोकाः सन्ति। महापुराणेऽस्मिन् श्रीशुकदेवपरीक्षितोः संवादः विद्यते। महापुराणेऽस्मिन् ३३५ अध्यायाः सन्ति। महापुराणेऽस्मिन् भगवतः श्रीकृष्णस्य बाल्यलीलानां विस्तृतं वर्णनं सम्प्राप्यते।

श्रीमद्भागवतमहापुराणं विदुषां ज्ञानिनां विद्यावतां च परीक्षायै शिखररूपं मौलीभूतं विद्यते। अत एव कथ्यते **"विद्यावतां भागवते परीक्षा"**

---

[२] *पद्मपुराणगत-भागवतमाहात्म्यम्, ३/२६*

[३] *तदेव, ३/६१-६२*

[४] *तदेव, ६/३०*

तथैव **"ज्ञानं भागवतावधि"** एतदपि ज्ञानस्य परिसमाप्तिः सीमा वा भागवते अस्ति भागवतमस्ति।

**श्रीमद्भागवते स्तुतिभागः**

श्रीमद्भागवतमहापुराणे ज्ञानं कर्म भक्तिश्च त्रयाणां समन्वयः दृश्यते केचन महापुरुषाः तथा कथयन्ति यदि श्रीमद्भवद्गीतायां ज्ञानयोगस्य कर्मयोगस्य भक्तियोगस्य ये अष्टादशाध्यायाः सन्ति तेषामष्टादशाध्यायानां भाष्यं श्रीमद्भागवतमहापुराणम् अष्टादशसहस्रश्लोकैः करोति। यथा वेदस्य त्रयः विषयाः सन्ति ज्ञानं कर्म उपासना च। तथैव भागवतस्यापि त्रयः विषयाः सन्ति ज्ञानं कर्म भक्तिश्च अत्र भक्तिविषये स्तुतयः समागच्छन्ति। भक्तानां शस्त्रं बलं समाराधनं भगवत्प्रसन्नतासम्पादनसाधनं स्तुतिः विद्यते। श्रीमद्भागवतमहापुराणे बह्व्यः स्तुतयः सन्ति तासु काश्चन इत्थं सन्ति। उत्तरास्तुतिः, कुन्तिस्तुतिः, वृत्रस्तुतिः, ज्वरस्तुतिः, वेदस्तुतिः, दक्षस्तुतिः, ब्रह्मणःस्तुतिः, ध्रुवस्तुतिः, प्रह्लादस्तुतिः, गजेन्द्रस्तुतिः, पृथुस्तुतिः, एतासु स्तुतिषु अग्रिमपङ्क्तौ एका स्तुतिः समागच्छाति सा विद्यते श्रीमद्भागवतमहापुराणे प्रथमस्कन्धे नवमेऽध्याये भीष्मस्तुतिः। बाणशय्यायां सुप्तः पितामहः भीष्मः गाङ्गेयः देवव्रतः भक्तशिरोमणिः श्रीभीष्मपितामहः एकादशश्लोकैः भगवतः श्रीकृष्णस्य भावपूर्णां स्तुतिं करोति पुष्पिताग्रा छन्दसि च कथयति भवता कठोरकृपारूपेण प्रायश्चित्ताय या बाणशप्या दत्तास्ति सापि मह्यं पुष्पिताग्रभागरूपा वर्त्तते येन पुष्पिताग्रा छन्दसि स्तौमि।

**स्तुतिशब्दस्यार्थः**

***सुखे दुःखे तथा मुक्तौ त्रिविधं स्तोत्रमुच्यते।*** सुखावसाने मात्रा कृन्त्या स्तुतिः कृता। दुःखावसाने परमदुःखावस्थायां उत्तरया स्तुतिः कृता। तथैव देहावसाने मृत्युकाले पितामहेन भीष्मेण स्तुतिः कृता। स्तोत्रं कस्य न तुष्टये? अर्थात् स्तुत्या स्तोत्रेण प्रार्थनया सर्वेऽपि तृष्टाः भवन्ति। स्तु + क्तिन् = स्तवः।

**इति स्तुतिः का खलु चन्द्रिकाया यथाब्धिमुप्युत्तरलीकरोति।** [५]

**यथा चाग्रे स्तुतिः सिद्धिरिति ख्याता श्रिया संसरणाच्च सा।**

**लक्ष्मीर्वा ललना वापि क्रमात् सा कान्तिरुच्यते॥**[६]

**स्तूयते अनेनेति स्तोत्रम्। स्तूयते अनयेति स्तुतिः।**

**द्रव्यस्तोत्रं कर्मस्तोत्रं विधिस्तोत्रं तथैव च।**

**तथैवाभिजनस्तोत्रं स्तोत्रमेतच्चतुष्टयम्॥**[७]

भक्तानां बलं धनं स्वरूपं सर्वं स्तुतौ भवति। भक्ताः स्वभावतः स्तुतिं स्तोत्रं प्रकुर्वन्ति। स्तुतौ आर्तनादः भवति। प्रार्थनायां कदाचित् याचना भवितुमर्हति स्तोत्रे भगवद्गुणानुवादः भवितुमर्हति। स्तुतौ आर्तनादः भावप्राचूर्यमयाचकत्वेन सह समर्पणो भावः प्रधानः भवति। अहैतुकीं भक्तिं कुर्वाणाः ससमर्पणमेव स्तुत्या भगवन्तं स्तुवन्ति। मनुष्यं तोषयितुमर्पणमनिवार्यम्। पितृन् तोष्टुं तर्पणमनिवार्यं किन्तु भगवतः प्रसन्नतां प्राप्तुं समर्पणं स्तुतिबलं भावप्राचूर्यमनिवार्यम्।

**श्रीमद्भागवते टीकाग्रन्थाः -**

श्रीमद्भागवतमहापुराणं विदुषां प्रियतमं पुराणं विद्यते ज्ञानप्राचूर्यं व्यासस्य सर्वस्वभूतं समाधिभाषामयं विद्यते अतः तस्य विविधान् अर्थान् प्रकाशयितुं महापुरुषैः बहुधा तत्र व्याख्याः टीकाश्च कृताः विद्यन्ते। श्रीमद्भागवतमहापुराणोपरि बह्व्यः टीकाः समुपलभ्यन्ते तासु – काश्चन् यथा अन्वयार्थाप्रकाशिका, सुबोधिनी, भगवत्तोषिणी, रूपसञ्जीवनी, भक्तमनोरञ्जिनी, भावार्थदीपिकाप्रकाशः, भागवतचन्द्रिका, पदरत्नावली, क्रमसन्दर्भः, सारार्थदर्शिनी, सिद्धान्तप्रदीपः, सुबोधिनीप्रकाशः,

---

[५] *नैषधे-३/११६*

[६] *देवीपुराणे, अध्याय-४५*

[७] *मत्स्यपुराणे, अध्याय-१२१*

बालप्रबोधिनी, एतासु टीकासु श्रीधरस्वामिकृता भावार्थदीपिका श्रीधरीटीका सुप्रसिद्धा वर्त्तते। अस्या: टीकाया: समाश्रयं कृत्वा अस्माभि: श्रीभीष्मस्तुतिरवलोक्यते। किन्तु तत्पूर्वं एवं तदपि ज्ञेयं भवति यत् –

**भक्त्या भागवतं शास्त्रं न बुद्ध्या न च टीकया॥**

श्रीमद्भागवतमहापुराणं प्रति विशेषतो समादर: श्रद्धा, भाव:, विश्वास:, भक्तिश्च वर्तते चेदेवावगन्तुं शक्यते पुनश्च भक्त्या भागवतं शास्त्रं लभ्यते किन्तु भक्ति: भागवतेन लभ्यते अत: परस्परं विद्यते यत् भक्त्या भागवतं भागवतेन भगवता वा कृपया च भक्तिरिति। तथैव श्रीधरीटीका सहजतया भागवते प्रवेशं कारयति। एतदर्थं प्रोक्तं विद्यते यथा –

**व्यासो वेत्ति शुको वेत्ति राजा वेत्ति न वेत्ति वा।**
**श्रीधर: सकलं वेत्ति श्रीनृसिंहप्रसादत:॥**

पुनश्च कृपयैव एतत्साध्यते किन्तु विशेषा विशिष्टा कृपा यत्र भवति तत्रैव ईदृक् सामर्थ्यं समागच्छति। पात्रता भवति चेत् कृपावृष्टि: परमात्मना क्रियते। टीकाकारेषु भगवत: महतीकृपा विद्यते तेषु श्रीधर: स्वामिन: टीकायै प्रोक्तं विद्यते।

**भावार्थदीपिकामेतां भगवद्भक्तवत्सलाम्।**
**परमानन्दपादाब्जभृङ्गश्री: श्रीधरोऽकरोत्॥**

बहुभि: प्राचार्यपादै: बह्व्य: टीका: कृतास्ससन्ति किन्तु ता: सर्वा: अतिशेते श्रीश्रीधराचार्यस्य नाम्ना एव ख्यातपदा श्रीधरीटीका।

**श्रीधरस्वामिन: सारल्यम् –**

**क्वाहं मन्दमति: क्वेदं मन्थनं क्षीरवारिधे:।**
**किं तत्र परमाणुर्वै यत्र मज्जन्ति मन्दर:॥**
**क्वेदं नाना निगूढार्थं श्रीमद्भागवतं क्व नु।**
**मन्दबुद्धिरहं कृष्णप्रेम किं किं न कारयेत्॥**

टीकाकारोऽयं भगवत्कृपाभागयं श्रीधरः श्रीनृसिंहस्य भक्तः आसीदित्यनेन पद्येन स्पष्टं भवति यथा –

**वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि।**
**यस्यास्ते हृदये संवित् तं नृसिंहमहं भजे॥**

सामान्यजनेभ्यः भागवतं ज्ञातुमवगन्तुं रसास्वादकर्तुं सरलं सहजं नास्ति। अतः कस्यचिदेकस्य महापुरुषस्याश्रयं कृत्वा महापुराण-महासागरेऽस्माकं कश्चिद् प्रवेशो भवेत् तेन संसारसागरस्य विस्मरणं भवेत् महापुरुषेण भगवतः भगवद्भक्तस्य च संस्मरणं भवेत् तेन मरणं भगवच्छरणमयं भवेत् तादृशो भावः उरसि कृत्वा मरणासन्नस्य प्रपन्नस्य भक्तप्रवरस्य पितामहभीष्मस्य स्तुतिशरणं गच्छमि येन **अन्ते मतिः सा गतिः** इति भीष्मेण पितामहेन भगवत्कृपया यत् चरितार्थं कृतं तया धिया ममापि मतिरियं गतिरियं रतिरियं भगवदाश्रिता भीष्मानुपदेन भवत्विति श्रद्धया भावेन विषयोऽयं चितः विद्यते।

इदानीं श्रीधरीटीकानुसारेण भीष्मस्तुतिः एकादशपद्यैः पुष्पिताग्रायां यथा–

**<u>अथ भीष्मस्तुतिः -</u>**

स्तुतिरियं भागवतमहापुराणे प्रथमस्कन्धे नवमाध्याये द्वात्रिंशत् श्लोकादारभ्यते। अत्रैकादशश्लोकास्सन्ति। एकादशैरिन्द्रियैः भीष्मः भगवन्तं स्तौति। स्तुतिः तदैव भवेत् स्तुतौ प्रथमे श्लोके भीष्मः पितामहः स्वमतिं भगवति समर्पयति। मनोबुद्धी भगवद्भक्तौ बाधके स्तः। अतः तयोः समर्पणं भवेत् चेत् भक्तौ नास्ति विप्रतिपत्तिः।

**श्लोको यथा –**

**इति मतिरुपकल्पिता वितृष्णा भगवति सात्वतपुङ्गवे विभूम्नि।**
**स्वसुखमुपगते क्वचिद्विहर्तुं प्रकृतिमुपेयुषि यद्भप्रवाहः॥**

**<u>सरलार्थः -</u>** यस्मात् न कोऽपि महान् तथा यः सदा स्वस्मिन् परमानन्दैव तिष्ठति कदाचित् विहारं कर्तुं योगमायां स्वीकरोति यस्मात् सृष्टिः

चलति तादृशाय यदुवंशशिरोमणये भगवते मम तृष्णारहितां मतिं प्रददामि समर्पयामि।

**श्रीधरीयथा –** भगवत: ध्यानरूपां लक्षणदधानां मतिं समर्पयति भीष्म:। कुत्र? तर्हि सात्त्वतकुलश्रेष्ठपुरुषे षडैश्वर्ययुक्तभगवति 'वितृष्णा' निष्काममतिं वा 'अवितृष्णा' अवितृप्ता अपरितृप्ता दर्शनात् या तृप्तैव न भवति तादृशी सर्वदा दर्शनोन्मुखी 'विभूम्नि' यस्मात् नाधिक: कश्चित् व्यापक: भगवान् –

स ईश्वर: स्वस्य परमानन्दस्वरूपं प्राप्तमेव वर्तते स्वरूपलक्षणान्ते तटस्थलक्षणमाह। क्वचित् कदाचित् वृन्दावनादिषु स्थलेषु 'विहर्तुं' क्रीडाकर्तुं योगमायाम् 'उपेयुषि' स्वीकरोति तस्मिन् भगवति स्वरूपाच्छादनेन जीववत् परतन्त्रो भूत्वा प्रकृतिं न स्वीकरोति किन्तु प्रकृते: स्वामी भूत्वा तां स्वीकरोति 'प्रकृतेर्भवप्रवाह:' यया प्रकृत्या सृष्टिपरम्परा भवति।

विग्रहवर्णनाय द्वितीय: श्लोक: यथा –

**त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने।**
**वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या॥**

**सरलार्थ: -** त्रिभुवनसुन्दर: तमालश्यामवर्णयुतं सूर्यकिरणैरिव निर्मलं पीताम्बरं तथा केशगुच्छैराच्छादितं मुखकमलं दिव्यं शरीरं दधानं श्रीकृष्णं विजयसखायं स्तौमि तस्मिन् मम निष्कामा प्रीतिरस्तु।

**श्रीधरीयथा –** 'त्रिभुवनकमनम्' त्रिभुवनेऽतिसुन्दरं शरीरं दधाने श्रीकृष्णे मम प्रीतिरस्तु। कीदृक् शरीरम्? तमालमिव श्यामो नीलो वर्णो वा यस्यास्ति। प्रात: कालिनसूर्यकिरणैरिव स्वात्मानं य: गौरं करोति। मस्तकस्य केशगुच्छैराच्छादितं मुखमण्डनं यस्यास्ति तादृक् शरीरं स्वरूपं यस्यास्ति तस्मिन् 'विजयसखे' पार्थमित्रे। अनवद्या भेदरहिता फलानुसन्धानरहिता मे प्रीतिर्भवतु।

**विजयसखित्वमेवानुवर्णयन् रतिं प्रार्थयते तृतीये श्लोके :**

श्लोको यथा –

**युधि तुरगरजोविधूम्रविष्वक् कचलुलितश्रमवार्यलङ्कृतास्ये।**
**मम निशितशरैर्विभिद्यमानत्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा॥**

**सरलार्थः -** युद्धे अश्वपदादुत्थितरजसा यः धूसरितः केशलुलितं प्रस्वेदबिन्दुना समलङ्कृतः मम तीक्ष्णबाणैर्यः विद्धः कवचेनावृतः यः श्रीकृष्णोऽस्ति तस्मिन् तादृशे भगवति मम मनः नित्यं तिष्ठतु।

**श्रीधरीयथा -** युधि- युद्धे तुरगरेणुना धूलिधुसरित केशैर्यो विलसति 'विष्वक्' 'श्रमवारि' प्रस्वेदबिन्दुः भक्तवात्सल्यं दर्शयति श्रमवारिणा सुशोभितं मुखकमलं यस्यास्ति तस्मिन् ममात्मा मे मनः रमणं कुरु। कीदृशश्च स भगवान्? तर्हि मम तीक्ष्णबाणैः यस्य त्वक् विद्धा वर्त्तते। बाणैः भग्नं कवचं यस्योपरि विलसति तादृशे श्रीकृष्णे मम मनः रमतात्।

**चतुर्थः श्लोको यथा –**

**सपदि सखिवचो निशम्य मध्ये निजपरयोर्बलयो रथं निवेश्य।**
**स्थितवति परसैनिकायुरक्ष्णा हृतवति पार्थसखे रतिर्ममास्तु।।**

**सरलार्थः -** सख्युः अर्जुनस्य वचनं श्रुत्वैव **सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत। यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान्॥** येन स्वकालदृष्ट्या शत्रुयोद्धानां आयुर्हृतं तस्मिन् पार्थमित्रे मम रतिरस्तु, प्रीतिरस्तु।

**श्रीधरीयथा** - सख्युः अर्जुनस्य वचनं श्रुत्वा 'सपदि' तत्क्षणमेव शत्रुसेनयोः बलयोः मध्ये रथः स्थापितः तत्र च स्थित्वा पुनश्च यः विजयस्यार्जुनस्य मैत्रीं दर्शयन् 'परस्य' दुर्योधनसैन्यस्य सैनिकानां 'अक्ष्णा' कालदृष्ट्या आयुर्हरति विलक्षणम् दृष्ट्यैवायं भीष्मः, अयं द्रोणः अयं कर्णः। इति परिचयं कारयन् यः शत्रूणां आयुर्हरति तस्मिन् श्रीकृष्णे मे प्रीतिः रतिश्चास्तु।

आयुर्हरणं तु तेषां मोक्षार्थमेव **यमिह निरीक्ष्य हता गताः सरूपम्** इति वंशीधरीटीकायाम्।

शत्रूणामायुः पार्थस्याज्ञानं हरत् पञ्चमः श्लोकोः यथा –

**व्यवहितपृतनामुखं निरीक्ष्य स्वजनवधाद्विमुखस्य दोषबुद्ध्या।**
**कुमतिमहरदात्मविद्यया यश्चरणरतिः परमस्य तस्य मेऽस्तु॥**

**<u>सरलार्थः -</u>** सेनाग्रजान् दृष्ट्वा अर्जुनोऽब्रवीत् स्वजनवधं नेच्छामि तदा श्रीकृष्णः आत्मविद्यया श्रीमद्भगवद्गीतया तेन ज्ञानेन अर्जुनस्य कुमतिमहरत् तस्मिन् पुरुषोत्तमे मम प्रीतिरस्तु।

**<u>श्रीधरीयथा -</u>** 'व्यवहिता' दूरे स्थिता 'पृतना' सेना तस्याग्रे स्थितानां मुखानि दृष्ट्वा भीष्मद्रोणप्रभृतीनां स्वजनवधाद्विमुखो भवामि। **एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन।** तथा च **न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे।**

**अपि त्रैलोक्य राज्यस्य हेतोः किं नु महीकृते।**

इमां कुमतिं हरति श्रीकृष्णः गीतायाः आत्मज्ञानेन आत्मविद्यया द्वितीयाध्यायादारभ्य अष्टादशं यावत्। अर्जुनस्तु **"विसृज्य सशरं चापं शोकसंविग्नमानसः"** आसीत्। **तादृशस्य अर्जुनस्याज्ञानं येन हृतं तस्मिन् मे प्रीतिरस्तु।**

ममोपरि अपि महान् अनुग्रहः कृतोऽस्तीति श्लोकाभ्यां स्तौति भीष्मः।

**स्वनिगममपहाय मत्प्रतिज्ञां ऋतमधिकर्तुमवप्लुतो रथस्थः।**
**धृतरथचरणोऽभ्ययाच्चलद्गु र्हरिरिव हन्तुमिभं गतोत्तरीयः॥**

**शितविशिखहतो विशीर्णदंशः क्षतजपरिप्लुत आततायिनो मे।**
**प्रसभमभिससार मद्वधार्थं स भवतु मे भगवान् गतिर्मुकुन्दः॥**

**<u>सरलार्थः -</u>** स्वां प्रतिज्ञां त्यक्त्वा मम प्रतिज्ञा येन पालिता रक्षिता पूर्णा च कृता रथचक्रमेकं गृहीत्वा यः मयि आपतितः आक्रमणं कृतवान् यथा सिंहः गजशिशौ आक्रमति तद्वत् तस्मिन् काले पृथ्वी स्ववस्त्रेण यः समास्वसिति तस्मिन् मुकुन्दे मे रतिरस्तु। तस्मिन् मम गतिरस्तु।

अहमाततायी तेन भग्नकवचधृतेन श्रीकृष्णेन मम वधार्थं सवेगमागमनं कृतं स मोक्षदाता श्रीकृष्ण: एक एव मम गतिरस्तु।

**श्रीधरीयथा-** ’स्वनिगमम्’ अहं शस्त्रं न धारियिष्ये इति स्वां प्रतिज्ञामपि अलक्ष्य श्रीकृष्णपार्श्वेऽहं शस्त्रधारणं कारयिष्ये इति या मम प्रतिज्ञा आसीत् सा ’ऋतम्’ सत्यम् कर्तुं ’अधि’ पूर्णां कर्तुं रथस्थ: श्रीकृष्ण: ’अवप्लुत:’ रथात् कूर्दित: ’हरिरिव’ सिंहमिव ’रथचरण:’ रथचक्रं गृहीत्वा ’इभं’ गजशिशौ मयि ’अभ्ययात्’ मयि आपतित: “ तस्मिन् काले श्रीकृष्णस्य स्वरूपमिदं दृष्ट्वा चलद्गु:। पृथ्वी विचलिता जाता तां पृथ्वीं स्थिरां कर्तुं श्रीकृष्ण: गतोत्तरीय: उत्तरीयवस्त्रं भूमौ निधाय तां समाश्वसिति। तस्मिन् मुकुन्दे श्रीकृष्णे मम गतिरस्तु।

एवं यदा स मयि आपतित: धावन् च आसीत् तदा स स्मितमुख: आसीत् मयि आततायिनि कृपां कर्तुमेव धावितवान् तदा मम शितै: तीक्ष्णै: बाणै: विद्ध: सन् ’विशीर्णदंश:’ विद्धकवच: क्षतजेन रक्तेन परिप्लुत:’ रक्तरञ्जित: ’प्रसभम्’ बलपूर्वकं तादृशं श्रीकृष्णं पार्थ: वारयति तस्याप्यवज्ञां कुर्वन् मम वधार्थं अभिससार। मां प्रति धावितवान्। लोकदृष्ट्या अर्जुनस्य पक्षपातिरिव दृश्यते किन्तु वास्तविकतया मयि एव कृपां वर्षयितुमनुग्रहञ्च कर्तुर्मभिससार। मम भक्तस्य वचनं प्रतीज्ञा च मिथ्या मास्तु तादृशे भक्तवत्सले भगवति मम गतिरस्तु।

इत्थमन्यैरपि भृत्यरक्षाव्यग्रे कृष्णे रतिमाशास्ते अष्टमे श्लोके –

श्लोको यथा –

**विजयरथकुटुम्ब आत्ततोत्रे धृतहयरश्मिनि तच्छ्रियेक्षणीये।**
**भगवति रतिरस्तु मे मुमूर्षोर्यमिह निरीक्ष्य हता गता: सरूपम्॥**

**सरलार्थ: -** विजयरथ: नाम अर्जुनस्य रथ: तस्मिन् रथे यस्य दक्षिणहस्ते तोत्रं वर्त्तते वामहस्ते धृतहयरश्मिनि च तेन दृश्येन शोभमाने यस्य दर्शनं कुर्वन्त: कुर्वन्त: युद्धभूमौ यावन्त: मृता: तै: सारूप्यमुक्ति: संप्राप्ता

विद्यते तादृशे सारूप्यमुक्तः प्रदातरि तस्मिन् श्रीकृष्णे मे मुमूर्षोः परमां प्रीतिर्भवतु।

**श्रीधरीयथा: -** अर्जुनस्यैकं नाम विजयः किन्तु भगवता यस्य रथारोहणं यदा कृतं तदैव युद्धे यस्य विजयो निश्चितः जातः तेन अर्जुनः विजयनाम्ना उद्घोष्यते –

**यत्र योगेश्वरः कृष्णः यत्र पार्थो धनुर्धरः।**
**तत्र श्रीविजयोर्भूतिर्ध्रुवा नीतिर्मतिर्मम॥**

विजयरथैव यस्मै कुटुम्बं तादृशः श्रीकृष्णः एकस्मिन् हस्ते तोत्रम् अपरेऽस्मिन् करे हयरश्मिनि धृत्वा रथं चालयति। **व्रीह्यादिभ्यश्च**[८] रश्मि शब्दः अकारान्तः नास्ति अपि तु इकारान्तः वर्तते तथापि पाणिनिसूत्रानुसारं व्रीहि आदयः शब्दैरिव रश्मि शब्दोऽपि 'इनि' 'इन्' प्रत्ययेन जातः।

सारथिकर्मणा यो विलसति तच्छ्रिया यः ईक्षणीयः शोभमानः तस्मिन् श्रीकृष्णे मम मुमूर्षोः मरणेच्छुकस्य अचिन्त्यैश्वर्यसम्पन्ने। श्रीकृष्णे परमात्मनि मे रतिरस्तु। अत्र युद्धे ये हताः वीरगतिं प्राप्ताः ते भगवन्तं पश्यन्तः पश्यन्तः गता अतः न केवलं वीरगतिं अपि तु सारूप्यां गतिं गताः। एतद् दिव्यदृष्ट्या पश्यन् भीष्मः प्राह।

स्वधर्मपालनपूर्वकं सारूप्यं गतिचक्रं प्राप्यते तदनेन नवमपद्येन यथा –

**ललितगतिविलासवल्गुहास-प्रणयनिरीक्षणकल्पितोरुमानाः।**
**कृतमनुकृतवत्य उन्मदान्धाः प्रकृतिमगन्किल यस्य गोपवध्वः॥**

**सरलार्थः -** ललिता गतिः यस्य सः मनोहरः रासविलासः यस्य सः मधुरं हास्यं यस्य सः प्रेमपूर्णा दृष्टिः यस्य सः महाप्रेम्णः उत्थानपूर्वकं याः गोप्यः भगवन्तं श्रीकृष्णं भजन्ति स्म गोवर्धनादिधारणलीलाः अनुसरन्त्यः गोपवध्वः गोप्यः योगिन्यः यस्य स्वरूपं प्राप्तवन्त्यः तस्मिन् भगवति मम प्रीतिर्भवतु।

---

*[८] पाणिनीयसूत्रम्-५/२/११६*

**<u>श्रीधरीयथा -</u>** सुन्दरा नयनरम्यागतिः यस्यास्ति तस्मिन्, यस्य रासविलासः मुखस्य हासविलासश्च यस्य मधुरोऽस्ति तस्मिन्, आत्मीयभावेन मनोहरगत्यादिभिः यस्य सर्वैः बहुमानं 'उरुमानः' क्रियते तस्मिन्, गोप्यः उत्कटानन्देन यस्मिन् अन्धाः विवशा सञ्जाताः सन्ति तादृशे गोकुलवृन्दावनयोः समाचरितासु लीलासु अद्यापि याः रममाणाः अनुकरणानुसरणं कुर्वाणाः गोप्यः यस्य प्रकृतिं स्वरूपं प्राप्नुवन्ति किल ताः धन्याः तेन गोपिभावेन स्तौमि यत् एतादृशे श्रीकृष्णे मम प्रीतिरस्तु।

पद्येऽस्मिन् 'अगन्' प्राप्य अत्र अगन् इति स्थाने 'अगमन्' रूपं विद्यते अत्र मध्यस्थस्य मकारस्य लोपो जातः आर्षप्रयोगोऽयम्।

जगत्पूज्यतामनुस्मरन् दशमः श्लोको यथा –

**मुनिगणनृपवर्यसंकुलेऽन्तः सदसि युधिष्ठिरराजसूय एषाम्।**
**अर्हणमुपपेद ईक्षणीयो मम दृशिगोचर एष आविरात्मा॥**

**<u>सरलार्थः -</u>** युधिष्ठिरस्य राजसूजयज्ञे एतैर्मुनिगणैः राज्ञैश्च या सभा सुशोभिता कृता तस्यां सभायां दर्शनीयः भगवान् श्रीकृष्णः अग्रपूजायै स्थितः सुशोभितश्चासीत्। जगतः आत्मतत्वभूताः भगवन्तः मम दृग्गोचरो मम नयनपथगामी भवतु। मम नेत्रयोः विषयः भवतु।

**<u>श्रीधरीयथा</u>** - मुनिगणैः नृपैश्च संकुले पूर्णा अन्तः सदसि सभायां सभामध्ये युधिष्ठिरस्य राजसूययज्ञे मुनिगणेभ्यः यः ईक्षणीयः अहो रूपं अहो स्वरूपं अहो धाम अहो अस्य नवं वयः तं महिमानं साश्चर्यं पश्यन्तः अग्रपूजायै यः सर्वदा सर्वत्र सुयोग्यः प्रथमपूज्य सः सदस्यामस्यामपि उपपेदे तदेव स्थानमुपगतः तादृशे जगदात्मतत्त्वभूते परमात्मनि श्रीकृष्णे मम प्रीतिरस्तु स श्रीकृष्णः ईक्षणीयः श्रीकृष्णः मम दृशि गोचरः भूत्वा आविः प्रकटितो भवतु तदेव मम अहो भाग्यं स एव मम भावः।

- सोऽहं कृतार्थोऽस्मीत्याहान्तिमेन श्लोकेन यथा –

**तमिममहमजं शरीरभाजां हृदि हृदि धिष्ठितमात्मकल्पितानाम्।**
**प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोहः॥**

**<u>सरलार्थः -</u> 'सर्वस्य चाहं हृदि सन्निविष्टः'** सर्वेषां हृदि स्थितः अधिष्ठितः सूर्यमिव एकः एवास्ति तथापि समेषां कृते प्रतिदृशमिव अनेकधार्कभूतः तस्मिन् श्रीकृष्णे मम अस्मिन् जन्मनि भेदरहिता भ्रमरहिता च बुद्धिः स्थिरा जाता तदेवास्ति मम जीवनफलम्।

**<u>श्रीधरीयथा -</u>** परमात्मा अजन्मा वर्त्तते किन्तु तस्य कृपाबलेनैव अहं तमधिगतः भेदरहितो भ्रमरहितो भूत्वाऽहं तमधिगतः प्राप्तः प्राप्तवान् वा 'आत्मकल्पितानाम्' स्वनिर्मित ' शरीरभाजाम्' शरीराणां मध्ये 'हृदि हृदि' **सर्वस्य चाहं हृदि सन्निविष्टः** तथा **च ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति** इति। कृत्वा वदति श्रीकृष्णे मम प्रीतिरस्तु। श्लोके अधिष्ठितम्' इति स्थाने अकारस्य लोपः दृश्यते पद्ये 'धिष्ठितम्' प्रयुक्तं सोऽस्ति आर्षप्रयोगः। 'न एकधा' अनेकरूपेण।

**अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम्।**
**नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप॥[१] (गीता -११-१६)**

अधिष्ठानभेदेन नैकरूपेण भासितो भवति तादृशं भगवन्तमहं प्राप्तवानिति भीष्मः स्वधन्यतां प्रतिपादयति कार्तज्ञ्यं विज्ञापयति। सर्वप्राणिनां नेत्रयोः नियामकरूपेण स्थितः सूर्यः भिन्न भिन्न रूपेण प्रतीतो भवति तद्वदत्रास्ति।

एतादृशे भगवति श्रीकृष्णे मम प्रीतिः रति मतिः गतिश्च भवतु।

**<u>उपसंहारः -</u>**

इत्थमेकादशश्लोकैरेकादशरिन्द्रियैः श्रीभीष्मः श्रीकृष्णं स्तौति। स्तुतिः कीदृशी भवति? तस्यां भावः कीदृशो भवति? छन्दः किं प्रयोजनीयम्? सर्वदृष्ट्या बाणशय्यायां दुःखे सुप्तः मरणासन्नः भीष्मः सुखपूर्वकं आनन्दस्वरूपभूतः साक्षात् भगवन्तमुदारमनसा बुद्ध्या निःस्वार्थभावेन स्तौति। भवतां सान्निध्यं विना नान्यत्किमपि काङ्क्षे। अन्ते भीष्मस्य मतौ भगवान्

---

[१] *श्रीमद्भगवद्गीता-११/१६*

प्रकटित: सा भगवत: कृपा किन्तु अन्तसमये तस्य मतौ एव भगवानागच्छति यस्य सम्पूर्णे जीवने दृष्टौ वाचि कर्मणि च भगवान् भवति।

अन्ते भगवता सह भगवद्भक्तप्रवरस्य भीष्मस्य चरणौ स्नेहाञ्जलिपूर्णां भावाञ्जलिं शब्दाञ्लिना समर्प्य धन्यतामनुभूय विरमामि।

**"इति शम्"**

**<u>सन्दर्भग्रन्था:</u>**

१. श्रीमद्भागवतमहापुराणम् (मूलमात्रम्), सम्पा.-द्वारकादास बी. भट्ट, गीताप्रेस, गोरखपुर, सं.२०३८
२. अनेकटीकोपेतभागवतम् (पू.श्रीकृष्णशङ्करशास्त्रिणा प्रकाशितम्), सम्पा.-प.पू.श्रीकृष्णशंकर शास्त्री, श्री भागवत विद्यापीठ, सोला, अहमदाबाद
३. श्रीधरीटीका सहितं श्रीमद्भागवतमहापुराणम्, सम्पा.-श्रीमति वैदेहि पार्थिवकुमार अध्यारु, गीताप्रेस, गोरखपुर, सं.-२०७५
४. श्रीमद्भगवद्गीता (मूलमात्रम्), सम्पा.-भवेशनाथ पाठक, ईस्टर्न बुक लिंकर्स, ई.स.-२००७
५. चर्पटपञ्जरिकास्तोत्रम् (जगद्गुरुशङ्कराचार्य विरचितम्), स्तोत्ररत्नावली, गीताप्रेस, गोरखपुर, सं.२०७१
६. महाभारतस्थं विष्णुसहस्रनामस्तोत्रम्, गीताप्रेस, गोरखपुर
७. नैषधीयचरितम्, डॉ.एन.जे.द्विवेदी, चौखम्बा संस्कृत सिरिझ ओफिस, वाराणसी, सं.-२०७२
८. मत्स्यपुराणम्, सम्पा.-एस.एन.अण्डेलवाल, चौखम्बा संस्कृत सिरिझ ओफिस, वाराणसी सं.२०७२
९. देवीभागवतम्, सम्पा.-हनुमानप्रसाद पोद्दार, चिमनलाल गोस्वामी, गीताप्रेस, गोरखपुर, सं.२०७२
१०. तत्त्वार्थदीपनिबन्धः, सम्पा.-वल्लभनिधिः, पुष्टिग्रन्थप्रकाशन, माण्डवी, ई.स.२००९

११. पद्मपुराणम्, सम्पा.-एस.एन.खण्डेलवाल, चौखम्बा संस्कृत सिरिझ ओफिस, वाराणसी, सं.२०७२
१२. पाणिनीय सूत्राष्टाध्यायी, श्री पं.ब्रह्मदत्त जिज्ञासु, रामलाल कपूर ट्रस्ट, ई.स.२०१८
१३. शब्दकल्पद्रुमः, सम्पा.-श्रीहरिचरण वसु, चौखम्बा संस्कृत सिरिझ ओफिस, वाराणसी, सं.२०२४
१४. श्रीमद्भागवतमहापुराणम्, वंशीधरीटीका, सम्पा.-डॉ.ब्रह्मानन्द त्रिपाठी, चौखम्बा संस्कृत प्रतिष्ठान, वाराणसी

**“ इति शम् “**

# वाल्मीकिरामायणे हनुमतः व्यक्तित्वम्

**डॉ. डायालालः मालदेभाई मोकरिया**

सहायकाचार्यः, साहित्यविभागः

श्रीसोमनाथसंस्कृतयुनिवर्सिटी, वेरावलम्

**मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम्।**
**वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शरणं प्रपद्ये।।**[१]

वाल्मीकिरामायणे हनुमतः चरित्रं श्रेष्ठं वंदनीयमेवमपूर्वमस्ति। हनुमति गुणानां पुञ्जोऽस्ति। रामस्य मन्दिरे रामपरिवारे तस्यापि स्थानमस्ति। ग्रामे ग्रामे एवं नगरे नगरे हनुमतः मन्दिराणि सन्ति। ईदृशविरलव्यक्तित्वस्यात्र शब्दैः भावपूजनमस्ति।

हनुमतः एवं रामस्य सम्बन्धः क्रिष्किन्धाकाण्डादागच्छति। अन्तरं तु उत्तरोत्तरं वर्धते। हनुमतः व्यक्तित्वं लोकहृदये अद्यापि तथैव तिष्ठति, अतः तु वाल्मीकिः वर्णयति -

**यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव।**
**धृतिर्दृष्टिर्मतिर्दाक्ष्यं स कर्मसु न सीदति।।**[२]

अत्र हनुमन्तं धीरः, दृष्टा, प्राज्ञः एवं कुशलः कथितः।
भगवत्याः सीतायाः मुखानापि हनुमतः गुणानामनेकस्थानेषु वर्णनमस्ति।

**तव सत्त्वं बलं चैव विजानामि महाकपे।**
**वायोरिव गतिं चापि तेजश्चाग्नेरिवाद्भुतम्।।**[३]

---

[१] *रामरक्षास्तोत्रम्, 33*

[२] *रामायणम्, 5/1/180*

[३] *रामायणम्, 5/35/42*

हनुमतः रामस्योपरि अनेकोपकाराः सन्ति, अतः सः चिन्तयति यत् तस्मै किं ददामि? यत् दातुमिच्छामि तदल्पमेव प्रतीयते, अतः केवलमालिङ्गनमेव ददाति।

हनुमतः दिव्यव्यक्तित्वं दृष्ट्वा भगवान् रामः हनुमते पुरुषोत्तमस्य पदवीं ददाति। पुरुषोत्तम-शब्दः केवलं भगवतः कृतैवास्ति, किन्तु भगवता रामेण भक्ताय हनुमते स्वसदृशं स्थानं दत्तम्। तत् तस्य चरित्रस्य महत्ता अस्ति।

हनुमन्तं प्रति सीतायाः तथैव प्रेम अस्ति। अयोध्यायां पुनरागमनं भवति तदा स्वस्यामूल्यकण्ठहारं हनुमते ददाति। हनुमान् अपि तस्मिन् राममेवान्वेषयति।

हनुमान् केसर्यञ्जनयोः वायुदेवस्य कृपया समुत्पन्नः पुत्रः अस्ति। सः जायते तदैव सूर्यस्य ग्रहणाय कुर्दते। अत्र केचन कवयः चिन्तयन्ति यत् वानरस्वभावेन फलस्यापेक्षया सः कुर्दते। किन्तु अत्र महाकविः भारविः स्मर्यते–

**किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः।**
**प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया।।**[४]

पयोदानां रवं श्रृत्वा सिंहः गुहात् बहिरागच्छति। मम सदृशः अन्यः कः? तथैव हनुमान्नपि महापुरुषोऽस्ति। पराक्रमेण सः सूर्यस्य ग्रहणं करोति। हनुमान् सूर्यस्य ग्रहणं करोति तदा इन्द्रः वज्रस्य प्रहारं करोति। हनुमान् मुर्छां प्राप्नोति तदा पिता वायुदेव क्रुद्ध्यते। वायुं विना कथं प्रचलेत् ! इन्द्रः वायुदेवेन सह समाधानं करोति। सूर्यः स्वस्यांशस्य तेजं ददाति।वरुणः यमः इत्यादयः देवाःअपि किमपि किमपि ददति। हनुमान् सर्वेभ्यः दिव्यान् विचारान्स्वीकृत्य शक्तिसम्पन्नः बुद्धिसम्पन्नः च भवति।

बालसहजस्वभाववशात् हनुमान् शान्तस्वभावतः ऋषिमुनीन् तपसि विघ्नमकरोत् अतः एकः मुनिः तस्मै शापं ददाति। यत् तव शक्याः विस्मरणं

---

[४] *किरातार्जुनीयम्, 2/21*

भविष्यति। अन्यः कोऽपि स्मार्यते तदा एव त्वं ज्ञास्यसि। समुद्रोल्लङ्घनसमये जाम्बवानः हनुमतं शक्तेः स्मरणं कारयति एवं हनुमान् पुनः शक्तिमान् भवति।

हनुमतः वक्तृत्वशक्तिः अद्भुता आसीत्। ऋष्यमूकपर्वतस्योपरि हनुमान् रामं मिलति तदा हनुमतः सम्भाषणं श्रुत्वा रामः लक्ष्मणं कथयति यत् यः ऋग्वेदयजुर्वेदसामवेदानां त्रयाणां वेदानां सततमवगाहनं करोति, यः व्याकरणस्य प्रगाढविद्वान् अस्ति, यः व्यवहारस्य एवं नीतिशास्त्रस्य पूर्णा ज्ञाता अस्ति सः एव ईदृशं भाषणं कर्तुं शक्नोति। भगवान् रामः ईदृशं यस्य कृते कथयति तस्य अभ्यासः एवमध्ययनं महत्  भवितुं शक्नोति।

वानरराज्येऽपि तस्य स्थानं गौरवपूर्णमासीत्। वालिः सुग्रीवं राज्यात् बहिः निष्काषयति तदपि हनुमान् सुग्रीवं न त्यजति। पुनः राज्यप्राप्तिः भवति तदा अपि तस्य मन्त्री भवति। वालिवधः भवति तदा तस्य पुत्रः अङ्गदः वैरं नेतुमिच्छति तस्मिन् समये हनुमान् एव तस्य समीपं गत्वा वानरराज्यं विभाजनात् रक्षति। न केवलं तावदेव, अङ्गदः सुग्रीवस्य एकनिष्ठं सेवकमपि करोति।

हनुमतः कर्तव्यशक्तिः अद्भुता असीत्। सः वास्तविकरूपेण बुद्धिमतां वरिष्ठमासीत्। सः सीतायाः अन्वेषणाय समुद्रोल्लङ्घनं करोति तत्रापि तस्य बुद्धेः, प्रलोभनस्य एवं भयस्य – त्रयाणां परीक्षा भवति। नागमाता सुरसा कथयति त्वं मम खाद्यमस्ति तदा सः बुद्धया ततः निर्गच्छति। मैनाकपर्वतः सुन्दरां सर्वभोगसामग्रीं नीत्वा कर्तव्यपरायणं हनुमन्तं विश्रामाय कथयति किन्तु हनुमान् तं भोगं परित्यज्य स्वकार्येऽग्रे सरति। लङ्कायामपि सिंहिकायाः समक्षं अहमेकाकी अस्मि इति विचिन्त्य न बिभेति,किन्तु साहसेन तां प्रति कार्यं करोति। भगवद्गीतायामुक्तमस्ति यत् –

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्।।**[५]

हनुमति एते गुणाः स्वाभाविकाः आसन्।

---

[५] *श्रीमद्भगवद्गीता, 16/1*

लङ्कायामपि हनुमान् सीतां पश्यति, अशोकवाटिकायां रावणः छलं कृत्वा सीतायै मानसिकं परितापं ददाति, तदा सा आत्महत्यां कर्तुमिच्छति तदा वृक्षारुढः प्रत्युत्पन्नमतिः हनुमान् ईक्ष्वाकुवंशस्य वर्णनं करोति। इदं श्रुत्वा सीता आत्महत्यां न करोति। अत्र हनुमान् सीतायाः हृदये विश्वासं स्थापयति।

हनुमान् मानसशास्त्रस्य महान् ज्ञाता अस्ति। लङ्कादहनेऽपि तस्य मर्कटलीला नासीत्, किन्तु शत्रुन् प्रति भयस्य वातावरणं सर्जितवान्। राक्षसानां मनसि भयः उत्पन्नः कृतः आसीत्। भयग्रस्ताः राक्षसाः युद्धं कथं कुर्युः! अतः सार्धं कार्यं तु सः युद्धस्य पूर्वमेव करोति।

हनुमतः व्यक्तित्त्वं पवित्रमस्ति,सः संयमी अस्ति। सः सीतायाः अन्वेषणाय लङ्कां गच्छति। तत्र रात्रौ रावणस्यान्तःपुरे विविधसुन्दरस्त्रीः अव्यवस्थितवस्त्रेषु पश्यति, किन्तु हनुमतः मनसि कोऽपि विकारः नागच्छति।

**कामं दृष्टवा मया सर्वा विश्वस्ता रावणस्त्रियः।**
**न तु मे मनसा किञ्चित् वैकृत्यमुपपद्यते।।**[६]

शीलवान् हनुमान् रामायणस्य भव्यं चरित्रमस्ति। शीलं कुतः आगच्छति तदर्थमपि रामायणसन्दर्भे रामलक्ष्मणयोः संवादे सुन्दररीत्या वर्णितः अस्ति। पुष्पं, फलं स्त्रीणां च यौवनम्- त्रिणि रूपाणि दृष्ट्वा कस्य नो चलते मनः?[७] पुष्पं सुन्दरं सौरभयुक्तं च भवति। फलं रसिकं स्वादिष्टं च भवति। स्त्रीणां यौवनमपि रसिकजनान् आकर्षयति। एतानि सर्वाणि मनोहारीणि सन्ति। अतोऽत्र संयमः आवश्यकोऽस्ति।

अत्रापि यः संयमी भवति तदर्थं लिखतमस्ति यत् यस्य पिता शुचिर्भूतो एवं माता पतिव्रता अस्ति। उभाभ्यामेव सम्भुतो तस्य मनः न चलते।।[८] यस्य पिता पवित्रः स्यात्, यस्य माता पतिव्रता स्यात् तयोः एव यः

---

[६] *रामायणम्, 5/9/38*

[७] *वाल्मीकिरामायणदर्शन, पृ. 84*

[८] *वाल्मीकिरामायणदर्शन, पृ. 84*

पुत्रः भवति, तस्य मनः न चलते। अत्र तु रावणस्य राज्यः आसन्। ताः सुन्दर्यः आसन्। तदपि हनुमतः चित्तं किञ्चदपि न चलते।

संयमः दूष्करः भवति अतः तदर्थमपि लिखितमस्ति यत् अग्निकुण्डसमा नारी घृतकुण्डसमः पुमान्। पार्श्वे स्थिता सुन्दरी चेत् कस्य नो चलते मनः?[९] यत्र अग्नेः कृते घृतं प्रज्वालनाय भवति। यथा अग्निघृतयोः सम्बन्धः वर्तते तथा सुन्दरस्त्रियाः पुरुषस्य च सम्बन्धः वर्तते। अग्निः घृतेन वर्धते। द्वयोः सङ्गमे सुरक्षा नास्ति तथैव सुन्दरीपुरुषयोः सम्बन्धोऽप्यस्ति। असावधानेन प्रज्जवलत्येव।

संयमस्योपायमपि वर्णयति यत् मनो धावति सर्वत्र मदोन्मतगजेन्द्रवत्। ज्ञानाङ्कुशसमा बुद्धिः यस्य स्यात् तस्य नो चलते मनः।।[१०] मनः मदोन्मतगजेन्द्रवत् यत्र तत्र भ्रमति। यथा गजः अङ्कुशेन नियन्त्रितः भवति तथैव मनः अपि ज्ञानेन नियन्त्रितं भवति।

हनुमतः वाक्कौशल्यमपि महनीयमासीत्। सुग्रीवः रामलक्ष्मणयोः भेदं ज्ञातुं प्रथमं हनुमतमेव प्रेषयति। हनुमान् स्वस्य वाग्पटुताद्वारा रामलक्ष्मणौ कौ? तौ दशरथपुत्रौ स्तः। तयोः आगमनस्य रहस्यं हनुमानैव ज्ञातुं शक्नोति। रावणस्य समक्षमपि तस्य वाग्कौशलं द्दष्टुं शक्नुमः। सुरसाप्रसङ्गः, सिहिंकावृतान्तः, लङ्किनीप्रसङ्गः इत्यादिषु हनुमतः वाग्कौशल्यं द्दष्यते। तत्र हनुमतः स्वामीभक्त्याः अपि दर्शनं भवति।

इत्थं, हनुमतः व्यक्तित्वं सुन्दरं पवित्रं गौरवाविन्तमादर्शं चास्ति। रामायणे हनुमतः शीलस्य, शक्तेः, बुद्धेः, ज्ञानस्य, विद्वतायाः भव्यं दिव्यं च वर्णनमस्ति। हनुमतः चरित्रं वंदनीयमस्ति। हनुमते नमः।

---

[९] *वाल्मीकिरामायणदर्शन, पृ. 84*

[१०] *वाल्मीकिरामायणदर्शन, पृ. 85*

## संदर्भग्रन्थाः

1. स्तोत्ररत्नावली, रामरक्षास्तोत्रम्, गीता प्रेस, गोरखपुर
2. वाल्मीकिरामायणम्, सुन्दरकाण्डम्, सरस्वती पुस्तकभण्डारः, अमदावाद,
3. वाल्मीकिरामायणदर्शन, सद्विचारदर्शन, मुंबई
4. श्रीमद्भगवद्गीता, गीता प्रेस, गोरखपुर,
5. किरातार्जुनीयम्, सरस्वती पुस्तकभण्डारः, अमदावाद

~~~~~~~~~~~
~~~~~~~~~~~

# ज्यौतिषशास्त्रे दर्शनानां प्रभावः

**डॉ. रमेशचन्द्रशुक्लः**

सहायकाचार्यः,

श्रीसोमनाथसंस्कृतयुनिवर्सिटीसञ्चालित-संस्कृतमहाविद्यालयः, वेरावलम्

आदौ जिज्ञासा भवति किं नाम ज्यौतिषशास्त्रं किन्नाम दर्शनञ्च? तथा च जिज्ञासा भवति दर्शनस्य प्रभावः इति कथम्? अतो व्युत्पाद्यते यत् ग्रहाः एवं नक्षत्रतारानिहारिकाणाञ्च बोधकं शास्त्रं ज्यौतिषशास्त्रम् एवञ्च सूर्यादिग्रहः एवं कुलस्य बोधं यत् कारयति तस्य शास्त्रस्य नाम ज्यौतिषशास्त्रमिति कथ्यते।[१] अत्र प्रधानतया ग्रहनक्षत्रधूमकेतुल्वादिज्योतिष्पदार्थानां स्वरूपसञ्चारः एवं परिभ्रमणकालः ग्रहणे स्थितिप्रभृतिसमस्तघटनानां निरूपणम् एवं ग्रहणनक्षत्राणां गतिस्थितिसञ्चारानुसारेण शुभाशुभफलानां कथनं क्रियते। केषञ्चित् मनुष्याणामभिमतं वर्तते यत् नभोमण्डले ग्रहस्थितिविषयकज्योतिर्विद्या कथ्यते। यस्मिन् शास्त्रे अस्याः विद्यायाः साङ्गोपाङ्गं वर्णनं भवति तद् ज्यौतिषशास्त्रमिति। प्रथमव्युत्पत्यर्थे –

एतावदेवमन्तरं विद्यते यत् प्रथमपक्षे गणितफलितोभयपक्षयोः समन्वयः कृतः वर्तते। अपरे = द्वितीये खगोलज्ञानोपयुक्तः दृष्टिकोणः वर्तते। विद्वद्वरेण्यानां कथनं वर्तते अस्य ज्यौतिषशास्त्रस्य कदा आविर्भावः अभवत्, सम्पति अनिश्चितं वर्तते। परन्तु अस्य विकासः शास्त्रीयनियमानां संशोधनं परिवर्धनञ्च प्राचीनकालादारभ्य अद्यावधि निरन्तरमागच्छति[२]। पुनः[३] किन्नामदर्शनम्, अस्य व्युत्पत्तिः क्रियते तदा दृश्यतेऽनेनेति दर्शनम्। अर्थात् व्युत्पत्त्यर्थद्वारा अनेन दर्शनेन तात्विकस्वरूपानां दर्शनं भवति अत एव अस्य नाम दर्शनम्। भारतभूमिः सभ्यतायाः जननी अस्ति यदा अन्यदेशे

---

[१] *भारतीयज्यौतिषशास्त्रम् – नेमिचन्द्रशास्त्री प्रथमोऽध्यायः पृष्ठ – १*

[२] *भारतीयज्यौतिषशास्त्रम् – नेमिचन्द्रशास्त्री प्रथमोऽध्यायः पृष्ठ – १ तः २*

[३] *भारतीयदर्शन में प्रत्यक्ष ग्रन्थः प्रथम परिच्छेदः पृष्ठ – १*

अज्ञानान्धकारः प्रगाढरुपेण पश्रुतः आसीत्। तत्पूर्वमेव भारतवर्षे मनीषिजनाः अध्यात्मविद्यायाः चरमोत्कृष्टबिन्दुपर्यन्तं सिद्धिं प्राप्तवन्तः आसन्। तदानीं भारतीयविचारकाणां मस्तिष्के अनेके प्रश्नाः आसन्। अहं कः अस्मि? कुतः समागतोऽस्मि? अस्य दृश्यजगतः स्वरूपं किमस्ति? अस्योत्पत्तिः कथं जाता अस्य जगतः कर्ता कः? अयं सचेतनः वर्तते अथवा अचेतनः वर्तते। कर्तव्य एवम् अकर्तव्यमेवम् किमस्ति? इत्यादिप्रश्नानामुत्तरार्थं दर्शनस्य उत्पत्तिर्जाता।[४]

वस्तुतः जीवनस्य व्याख्या एव दर्शनमस्ति। भारतीयपरम्परायां ज्ञानोपलब्धिरथवा विद्या केवलंभौतिकसुखार्थमेव स्वीकृता नास्ति। अपितु अमृतत्त्वस्य प्राप्तः मूलम्। सा विद्या या विमुक्तये अर्थात् दर्शनस्य परमलक्ष्यम् अमृततत्त्वस्य प्राप्तिः वर्तते। यद्यपि मुक्तिकल्पनायां नितान्तमतभेदः विभिन्नदार्शनिकः अस्मिन् विषये एकमताः सन्ति। "आत्मनः स्वरूपेणावस्थितिःमोक्षः" प्रत्येकं जनानाम् आत्मानः ज्ञानानुभूतिःप्रदानं प्रायः समेषां दर्शनानां मुख्यलक्ष्यमस्ति। सम्प्रत्युपलब्धदार्शनिकसाहित्यस्य विभागद्वयं कर्तुं शक्यते ते एकम् आस्तिकदर्शनम्, द्वितीयं नास्तिकदर्शनम्। सामान्यतः वेदान्तप्रतिपाद्यप्रामाणिकतां यानि दर्शनानि स्वीकुर्वन्ति तानि आस्तिकदर्शनानि एतद्भिन्नदर्शनं नास्तिकदर्शनमितिनिगद्यते।[५]

(१) नास्तिकदर्शनस्य परिचयः – नास्तिकदर्शनेषु सर्वप्रथमं चार्वाक (लोकायत) अस्य नाम आगच्छति, दर्शनमिदं केवल भौतिकवादेन युक्तं वर्तते। अस्योद्देश्यं यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत्।[६] चार्वाक्सिद्धान्तस्य मूलग्रन्थः सम्प्रति अनुपलब्धो वर्तते। किन्तु सर्वदर्शनसंग्रहे चार्वाकस्य सिद्धान्ताः संकलिताः सन्ति।

---

[४] *भारतीयदर्शनेषु प्रत्यक्षः प्रथमपरिच्छेदः डॉ. हरिप्रसादशर्मा पृ – १ तः २*

[५] *भारतीयदर्शनेषु प्रत्यक्षः प्रथमपरिच्छेदः डॉ. हरिप्रसादशर्मा पृ – १*

[६] *भारतीयदर्शनेषु प्रत्यक्षः प्रथमपरिच्छेदः डॉ. हरिप्रसादशर्मा पृ – १ तः २*

(२) द्वितीयनास्तिकदर्शनं बौद्धदर्शनमस्ति। प्राचीनबौद्धदार्शनिकेषु नागार्जुनस्य नामोल्लेखः वर्तते। दिङ्नागः बौद्धन्यायपरम्परायां विशेष रूपेणोल्लेख्यः आति।

(३) तृतीयनास्तिकदर्शनं – जैनदर्शनमत्यन्तं प्राचीनदर्शनम् अस्य प्राचीनाचार्येषु उमास्वामी, सिद्धसेनः, दिवाकरः, नकलङ्कदेव एवं विद्यानन्दः एतेषां नामोल्लेखनीयमस्ति। प्रभावचन्द्रस्य न्यायकुमुदचन्द्र – प्रमेयकमलमार्तण्डनाम्ना कृतिः एवं हेमचन्द्रसूरिणां प्रमाणमीमांसादिग्रन्थ एवं मल्लेषणकृत्स्याद्वादमञ्जर्योः जैनदर्शनस्य स्पष्टविवेचनमुपलब्धं भवति। तेषा अनेकान्तवादसिद्धान्तः मौलिककसिद्धान्तः वर्तते।[७]

(४) आस्तिकदर्शनानि षड् सन्ति – यस्योल्लेखः अथः अस्ति

(१) न्यायदर्शनम् (२) वैशेषिकदर्शनम् (३) सांख्यदर्शनम् (४) योगदर्शनम् (५) मीमांसादर्शनम् (६) वेदान्तदर्शनम् इति।

(१) न्यायदर्शनम् – न्यायसूत्रस्य प्रणेता गौतममुनिः आसीत्। अस्य दर्शनोऽपरि वात्स्यायनः भाष्यं लिखितवान्। उद्योतकरः, वाचस्पतिमिश्रः जयन्तभट्टादि आचार्यैः स्वग्रन्थे न्यायमतस्योल्लेखाः कृताःसन्ति। नव्यन्यायस्य प्रवर्तकः गङ्गेशोपाध्यायः अस्ति। तत्त्वचिन्तामणिग्रन्थे अनेन नव्यन्यायस्य मतं स्पष्टीकृतम् अस्ति।

(२) वैशेषिकदर्शनम् – वैशेषिकसूत्रकारकणादमुनिः वैशेषिकाचार्येषु प्रशस्तपादोदयनः श्रीधरः विश्वनाथः तर्कपञ्चाननादिनामोल्लेखः वर्तते। प्रशस्तपादेन वैशेषिकदर्शनस्य मान्यग्रन्थपदार्थधर्मसंग्रहस्य प्रणयनं कृतम् अस्ति। उदयानाचार्येण स्वग्रन्थपदार्थधर्मसंग्रहस्य प्रणयनं कृतम् अस्ति।

---

[७] *भारतीयदर्शनेषु प्रत्यक्षः प्रथमपरिच्छेदः डॉ. हरिप्रसादशर्मा पृ – २*

उदयनाचार्यः स्वग्रन्थकिरणावल्यां भाष्यस्य रहस्योद्घाटनाय विद्वत्तापूर्णव्याख्यां लिखितवान्। न्यायकन्दलीसप्तपदार्थी, भाषापरिच्छेदः सिद्धान्तमुक्तावल्यादि अस्य दर्शनस्य मुख्यग्रन्थाः सन्ति।

(३) सांख्यदर्शनम् – सांख्यसूत्रस्य रचयिता महर्षिः कपिलः वर्तते। आसुरिपंचशिखेश्वरकृष्णः विन्ध्यवासी एवं विज्ञानभिक्षुः आदिजनाः अस्य दर्शनस्योपरि विभिन्नग्रन्थानां रचना कृतवन्तः। ईश्वरकृष्णस्य सांख्यकारिका प्रसिद्धः ग्रन्थः वर्तते। अस्य ग्रन्थस्योपरि अनेकटीकानां लेखनं वर्तते। दर्शने अस्मिन् मुख्यतः प्रकृतिः एवं पुरुषस्य ज्ञानात् मोक्षस्य प्राप्तिः दर्शितस्ति।

(४) योगदर्शनम् – योगदर्शनस्य प्रणेता पतञ्जलिमुनिः वर्तते। अस्य दर्शनस्योऽपरि व्यासभाष्यमुपलक्ष्यं वर्तते। व्यासभाष्योऽपरि विज्ञानभिक्षुः योगवार्तिकं लिखितवान्। अस्य दर्शनस्य क्षेत्रे वाचस्पतिमिश्रस्य तत्त्ववैशारदीनामकटीकायाः महत्त्वपूर्णस्थानं वर्तते।

(५) मीमांसादर्शनम् – मीमांसादर्शनं पूर्वमीमांसा एवं वेदान्तदर्शनम् उत्तरमीमांसानाम्नाप्रसिद्धं ज्ञायते। पूर्वमीमांसायां वेदस्य कर्मकाण्डम् एवम् उत्तरमीमांसायां ज्ञानकाण्डस्य अध्ययनं प्रस्तुतं वर्तते। मीमांसासूत्रस्य प्रणेता जैमिनिमुनिः वर्तते। अस्य दर्शनस्य मुख्यतः सम्प्रदायद्वयं वर्तते। भट्टसम्प्रदाय एवं प्राभाकरसम्प्रदायः। श्लोकवार्तिकः तन्त्रवार्तिकः, शास्त्रदीपिकादिभाट्ट-सम्प्रदायस्य ग्रन्थाः वर्तन्ते तथा बृहती प्रकरणपञ्चिकादि प्राभाकरसम्प्रदायस्य ग्रन्थाः वर्तन्ते। मानमेयोदये भाट्टमीमांसायाः स्पष्टोल्लेखः वर्तते।

(६) वेदान्तदर्शनम् – वेदान्तसूत्रकारः महर्षिबादरायणः आसीत्। वेदान्तसूत्रस्य द्वितीयनाम ब्रह्मसूत्रमपि वर्तते। अस्मिन् ब्रह्मणः विषये

विशेषरुपेणचर्चा कृता वर्तते। अस्य दर्शनस्योऽपरि वेदान्तपरिभाषा, वेदान्तसारः पञ्चदश्यादि अस्य प्रमुखप्रकरणग्रन्थाः सन्ति।[८]
भारतीयप्राचीनदार्शनिकजनाः ब्रह्माण्डज्ञानार्थम् अनवरतप्रयत्नं कृतवन्तः एवं ब्रह्मणः तथा आत्मनः स्वरूपं ज्ञातवन्तः भारतीयदार्शनिकाः ब्रह्मणः साक्षात्कारः स्व आत्मनः साक्षात्कारं मन्यन्ते।

(८) दर्शनशास्त्रे कर्मसिद्धातः – भौतिकक्रियायाः अपरनाम – कर्म वर्तते। गुणवत् इदमपिद्रव्याश्रितः भवति। कर्म द्रव्येषु चलभावेन निवसति। वस्तूनां संयोगः एवं विभागः कर्मकारणेन एव सम्भवति। कर्म गुणरहितं भवति। सर्वव्यापकद्रव्येषु कर्म (क्रिया) न संभवति।[९] तर्कसंग्रहग्रन्थे कर्मः पञ्चविधं भवति। (१) उत्क्षेपणम् (२) अपक्षेपणम् (३) आकुंचनम् (४) प्रसाणम् (५) गमनम्, (१) उपक्षेपणम् = उपरिदिशायां क्षेपणम् (२) अपक्षेपणम् = अधोदिशायां क्षेपणम् (३) आकुंचन = संकुचीकरणम् (४) प्रसारणम् = विस्तरणम् (५) गमन = गमनम् इति पञ्चकर्माणि भवन्ति।
(२) <u>अपक्षेपणकर्म</u> – अर्थात् मूर्तद्रव्यस्य अधोदेशेन सह यः सम्बन्धः तस्य असमवायिकारणकर्मापक्षेपणाकर्म कथ्यते।
(३) <u>अकुञ्चनकर्म</u> – कर्म एवं मूर्तद्रव्यस्य अभिमुखदेशेन सह यः संयोगः तस्य असमवायिकारणकमम् अकुञ्चन कथ्यते।
(४) <u>प्रसरणकर्म</u> – मूर्तद्रव्यस्य तिर्यक् देशेन यत् यः संयोगः तस्य असमवायिकारणरूपं यः मूर्तद्रव्यस्य कर्म तत प्रसरणं कथ्यते।
(५) मूर्तद्रव्यस्य अनियतोन्तर देशेन सह यः संयोगः तस्य असमवायिकारणं मूर्तद्रव्यस्य यत् कर्म तत् गमनं कथ्यते।

---

[८] *भारतीयदर्शनेषु प्रत्यक्षः प्रथमपरिच्छेदः डॉ. हरिप्रसादशर्मा पृ – १*
[९] *भारतीयदर्शनेषु प्रत्यक्षः सप्तम परिच्छेदः डॉ. हरिप्रसादशर्मा पृ – १९५*

यथा कर्मत्वजातिः प्रत्यक्षप्रमाणेन सिद्धा वर्तते। तथैव तस्य कर्म एव जातिव्याप्य उत्क्षेपणत्व अपक्षेपणत्व, आकुञ्चनत्व, प्रसारनत्व एवं गमनत्व एते यश्चजातयः अपि प्रत्यक्षप्रमाणेन सिद्धाः वर्तन्ते। भ्रमण, रेचनं, स्यन्दनं, ऊर्ध्वगमनं, तिर्यक्गमनं, नमन, उन्नमनादि, भिन्न–भिन्न समस्त कर्माणिगमनकर्मणः अन्तर्गतं सन्ति।[१०] कर्मोऽयं पृथ्वी, जलं, तेजः, वायुः एवं मनसि समवायसम्बन्धेन निवसति। आकाशः कालः, दिक्, एवम् आत्मा एतेषु विभुद्रव्येषु नैव निवसति। कर्म उत्क्षेपणोत्क्षेपणाऽकुञ्चनप्रसारणगमनभेदेन पञ्चप्रकारकाणि स्पष्टं भवन्ति।[११] अतः दर्शने कर्मसिद्धान्तं मन्यन्ते इति। तथैव गीतायां श्रीकृष्णेन उक्तम् –

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।**
**मा कर्मफलहेतुर्भूमारमा ते सङ्गोस्त्वकर्मणि॥**

श्लोकस्य आशयः वर्तते, कर्मणः उपरि तव अधिकारः वर्तते। परन्तु कृतकर्मणः फलोऽपरि तव अधिकारः नास्ति। पुनश्च दर्शनशास्त्रे ब्रह्माण्डं मन्यन्ते। तथैव ज्यौतिषशास्त्रेऽपि ब्रह्माण्डविचारः प्राप्यते यथा सिद्धान्ततत्त्ववेकग्रन्थे

**ब्रह्माण्डोदरमध्यगावनिजलाग्र्यूर्ध्वेन्दुपूर्वग्रहा**
**क्षेर्ध्विस्थप्रवहान्तगोलरचनासृष्टिर्यथावत्स्थिता॥**

**कालेऽस्मिन् गहने व्ययेऽस्ति सततं यस्मादियं तज्जय –**
**त्याद्यं निर्गुणमीशमव्ययपरब्रह्मैक तत्त्वं शुभम्॥**

दुर्गमे शाश्वद्धतमाने काले यस्मात् यत्परब्रह्मणः प्रभावात् ब्रह्माण्डस्योदरमध्ये अन्तर्गताः, अवनिः जलम्, अग्निः, तदूर्ध्वं चन्द्रप्र भृतयः ग्रहाः (शशाङ्कज्ञकविरविकुजेज्यदिक्रमेण न तु क्रमेण) ऋक्षाणि च

---

*[१०] तर्कसंग्रहः अन्नंभट्टविरचितम्, चतुर्थसूत्रम्*

*[११] तर्कसंग्रहः अन्नंभट्टविरचितम्, पृष्ठ १४*

तदूर्ध्वस्थितप्रवहन्तो वायुश्चेतेषां ये गोलाः मिथः सोमानान्तररूपास्तेषां रचना यस्यां सा तादृशी इयं सृष्टिः। यथा वद्धेदात्मतया स्थिताऽस्ति। तत् आद्यं सर्वपुराणं निर्गुणं निराकारम्, ईशं सर्वश्रेष्ठं शुभं शुभकरम्, एतत्तत्त्वं नानात्वभिन्नम् अव्ययं परब्रह्मम्जयति सर्वोत्कर्षेण वर्तते।

द्वितीयप्रमाणं यथा –

दर्शनशास्त्रे कर्मसिद्धान्तं मन्यन्ते तथैव ज्यौतिषशास्त्रेऽपि कर्मसिद्धान्तं मन्यन्ते जौतिषशास्त्रे कुण्डल्यां द्वादशभावाः भवन्ति। तनु – धनु – सुहृद् – बल – विद्या – शत्रु – स्त्री – मृत्यु – धर्म- कर्मादयाः आयव्ययादिद्वादशभावाः भवन्ति। एतेषु दशमस्थानं कर्मस्थानं मन्यन्ते। कर्मस्थानात् विचारणीय विषयाः आकाशवृत्तिः, पितासम्बन्धीविचारः, सन्मानऋण- प्रवासादीनां विचारः दशमस्थानात् विचारणीयः भवति। बृहत्पाराशरहोराशास्त्रत्रे प्रमाणं यथा –

**राज्यं चाकाशवृत्तिं च मानं च पितरं तथा।**
**ऋणं चापि प्रवासं च व्योमस्थानान्निरीक्षयेत्॥**[१२]

अन्यप्रमाणं यथा –

कर्मभावफलं यः लोककल्याणभावनया ब्रह्मादि कथितं यथा – पूर्णबलीकर्मेशः स्वराशिनवांशे व उच्चराशौस्थितं भवति। तदा जातकः पितृसौख्ययुक्तः पुण्यकारेषु संलग्नः एवं यशस्वी भवति। स एव कर्मेशः निर्बलो भवति तदा कर्महीनं भवति। राहुः केन्द्र वा नवमपञ्चमगतं भवेत् तदा सः ज्योतिष्टोमादियज्ञं करोति। ग्रन्थप्रमाणं यथा – बृहत्पाराशरतोराशास्त्रे यथा –

**अतः परं तु श्रोतव्यं त्वया कर्मभवं फलम्।**

---

[१२] *बृहत्पाराशरहोराशास्त्रभावविवेचनाध्यायः श्लोक – ११*

**चतुर्मुखादिभिर्यच्च प्रोक्तं लोकहितैषिभिः ॥**
**स्वराशयं स्वोच्चेग पूर्णबलोपेते तु कर्मपे।**
**पिहसौख्यान्वितो जातः पुण्यकर्मा सुकीर्तिमान्।**
**कर्माधिपौ बलोनश्चेत् कर्मवैकयमादिशेत्।**
**राहुः केन्द्रत्रिकोणस्थो ज्योतिष्टोमादियागाकृत् ॥[१३]**

<u>तथैव अन्यप्रमाणं यथा</u> – कर्मेशः (दशमस्थाने) शुभस्थाने शुभग्रहेण युक्तं भवति तदा जातकः वाणिज्य अथवा राजश्रभेण लाभं प्राप्नोति। अस्य विपरीतं पापयुक्तकर्मेशः अशुभस्थानस्थितं भवति तदा अशुभफ्लं प्राप्नोति।दशम एवं एकादश स्थानं पापग्रहाक्रान्तं भवति तदा मनुष्यः दुष्कर्मप्रवृत्तः स्वजनानां द्वैषी भवति। कर्मेशः अष्टमस्थं भूत्वा राहुग्रहेण युक्तं भवति तदा जातकः जनद्वेषीमहामूर्खः तथा दुष्कर्मकारकः भवति। कर्मेशः शनिना सह शनिभौमाभ्यां सह सप्तमस्थाने भवेत् एवं सप्तमेशोऽपि पापग्रहेणयुक्तः भवति तदा जातकः व्यभिचायुक्तः पटुश्च भवति।
बृहत्पाराशरहोराशास्त्रेग्रन्थप्रमाणं यथा –

**सौम्ययुक्ते शुभस्थाने संस्थिते कर्मपे सति।**
**वाणिज्यतो राजतो वा लाभो हानिविपर्यये ॥**
**दशमे पापसंयुक्ते कामे पापसमन्विते।**
**दुष्कृतिं लभते मर्त्यः स्वजनानां विदूषकः ॥**
**कर्मेशे नाशराशिस्थे सैहिकेयसमन्विते।**
**जनद्वेषी महामूर्खो दुष्कृतिं लभते नरः ॥**
**कर्मेशे द्यूनराशिस्थे मन्दभौमसमन्विते।**
**धनेशे पापसंयुक्ते शिश्नोदरपरायणः ॥[१४]**

---

*[१३] बृहत्पाराशरहोराशास्त्रम् कर्मभावफलाध्यायः - श्लोक – १ तः ३*
*[१४] बृहत्पाराशरहोराशास्त्रम् कर्मभावफलाध्यायः - श्लोक – ४ तः ७ पर्यन्तम्*

<u>तथैव अन्यप्रमाणं यथा शोभनयोगः</u> – रुरुयुक्तकर्मेशिः स्व उच्चराशौ भवेत् भाग्येशः कर्मराशिगतं भवति तदा जातकः मानैश्वर्यं एवं प्रतापपूर्णं भवति। लाभेशः दशमस्थाने कर्मेशः लग्ने भवति वा उभयोः केन्द्रेस्थितं भवति। मनुष्यः सुखी भवति। बलीदशमेशः गुरुयुक्तं भूत्वा मीनस्थितं भवति तदा जातकः निःसन्देहेण वस्त्राभूषणादिनां शौर्यमाप्नोति।

**<u>सूर्यसिद्धान्तग्रन्थोऽयमार्षग्रन्थः</u>** भूगोलाध्याये सृष्टिविषयसिद्धान्तः एवं प्रतिपादितं यथा – गुणास्त्रयः सत्वरजतमोरुपाः। कर्माणि = शुभाशुभानि प्राग्जन्मार्जितानि च अनयोः गुनकर्मणोः विभागेन (गुणकर्मानुरुपं) देवमानवदानवादिकं सकलं चराचरं वेदप्रतिपादितरीतितः पूर्वकल्पानुसारमेव यथाक्रमं यथास्वं ष्ट्वा धाता = यथा पूर्वमकल्पयादितिश्रुतेः प्रमाणात् पूर्वकल्पानुसारमेव सकलं जगत् सृजतीति बौधव्यम्। असौ विभुः सर्वशक्तिमान्, ब्रह्मा ग्रहनक्षत्रताराणां भूमेः वा विश्वस्य = ब्रह्माण्डान्तर्गतनिखिल लोकस्य, देवा-सुरमनुष्याणां सिद्धान्तनामपि यथा क्रमं विभागं कल्पयामास। ग्रहनक्षत्राणि भूमिश्चाकाशे स्थापिताः तेषु ग्रहाः नक्षत्राणिचानियतावत्स्थानानि तेषां भ्रमणशीलत्वात् भूमिश्च स्थिराऽतस्तस्या नियतावश्यानमिति। भूमावपि भूर्भुवः स्वरादिनां देवासुरमनुष्याणाञ्च यथा – योग्यमवस्थानं तदग्रतो भवेदितिग्रन्थ प्रमाणं सूर्यसिद्धान्ते भूगोलाध्याये यथा–

**गुणकर्मविभागेन सृष्ट्वा प्राग्वदनुक्रमात्।**
**विभागं कल्पयामास यथास्वं वेददर्शनात्॥**
**ग्रहनक्षत्रताराणां भूमेर्विश्वस्य वा विभुः।**
**देवासुरमनुष्याणां सिद्धानां च यथाक्रमम्॥**[१५]

[१५] *सूर्यसिद्धान्तभूगोलाध्यायः – श्लोकः २७ तः २८*

समीक्षा – एवं बहुविधविचाराः कर्मविषयकं, सृष्टिविश्अयकं ब्रह्माण्डविषयकं (प्रमाणाः) लिखितरुपेण ज्यौतिषशास्त्रे दृश्यमाणाः वर्तन्ते, अतः निश्प्रपञ्चं सिद्धयति यत् ज्यौतिषशास्त्रे दर्शनानां प्रभावः वर्तते इति शम्।

## संदर्भग्रन्थाः


| क्रमः | ग्रन्थनाम | ग्रन्थकारः | प्रकाशकः | प्रकाशन-वर्षम् |
|---|---|---|---|---|
| १. | भारतीयज्योतिषशास्त्म् | नेमिचन्द्रशास्त्री | भारतीय ज्ञानपीठ १८ इन्स्टीट्युशनल एरिया लोदी रोड, नई दिल्ली. ११०००३ | Fifty forth edition 2018 |
| २. | भारतीयदर्शन में प्रत्यक्ष | डॉ. हरिप्रसादशर्मा | परिमल पब्लिकेशन, कार्यालय २७/८८ शलिनगर दिल्ली, ११०००७. व्रिक्रिकेन्द्र २२/३ शालिनगर दिल्ली ११००७ दूरभाष – ०११२३८४५४५६ | प्रथम संस्करणम् – सन् २००७ |
| ३. | तर्कसंग्रहः | श्रीमदनमभट्टः | हंसा प्रकाशन ५७, नाराणी भवन, मिश्र राजा जी का रास्ता, चांद पोल बाजार, जयपुर ३०२०० | सन् – २०१५ |

| | | | | |
|---|---|---|---|---|
| ४. | गीता | धनश्यामदास जालान | गीताप्रेस पोष्ट गीताप्रेस, गोरखपुर | संवत् – २०१५ |
| ५. | सिद्धान्ततत्त्वविवेकः मध्यमाधिकारः | श्रीसूर्यमयासुर संवादरुपः आर्षग्रन्थः (श्री कपिलेश्वर शास्त्री) | चौखम्भा संस्कृत भवन, पोस्टबोक्स नं – ११६० चौक, बैंक ओफ बडौदा, बिल्डिंग, २२१००१ (भारत) फोन – ०५४२-२४२०४१४ | मुद्रण ० २००६ ई.ष वर्षम् |
| ६. | बृहत्पाराशरहोराशास्त्रम् | श्रीपराशरमुनि -विरचित सुसंस्कृतम् | चौखम्बा प्रकाशन पोस्टबोक्स नं – ११५० के ३७/११६ गोपालमन्दिर लेन वाराणसी – २२१००१ | नवम संस्करणम् विक्रम संवत् - २०६४ |
| ७. | सिद्धान्ततत्त्वविवेकः प्रथमो भागः | श्रीकमलाकर भट्ट विरचितम् तृतीयपुष्पम् | अनुसन्धान प्रकाशन, निदेशक डॉ. हरिश्चन्द्रमणि त्रिपाठी, प्रकाशनाधिकारी सम्पूर्णानन्द संस्कृतविश्वविद्याल य. २२१००२ | १९९६ तमे खैस्ताब्दे |



# भूमाधिकरणविचारः

**डॉ. जानकीशरण आचार्यः**
सहायकाचार्यः, दर्शनविभागः,
श्रीसोमनाथसंस्कृतविश्वविद्यालयः, वेरावलम्

ब्रह्मसूत्रशारीरकमीमांसायाः प्रथमाध्यायस्य तृतीयपादस्य द्वितीयमिदम् अधिकरणम्। अस्मिन्नधिकरणे सूत्रद्वयं वर्तते। उभयमपि सिद्धान्तपरमेव।

**भूमा सम्प्रसादादध्युपदेशात् (१.३.८)**

**धर्मोपपत्तेश्च (१.३.९)**

भूमा, सम्प्रसादाद्, अधि, उपदेशात् इति चतुष्पदं सूत्रम्।

धर्मोपपत्तेः, च इति द्विपदं सूत्रम्।

"भूमा" इति शब्दस्य बहुत्वम् इति अर्थः। बहोः भावः इति विग्रहे "पृथ्वादिभ्य इमनिज्वा" (पा. ५.१.१२२) इति सूत्रेण पृथ्वादिगणपठितबहुशब्दाद् भावार्थे इमनिच्प्रत्यये कृते "बहु+इमन्" इति स्थिते "बहोर्लोपो भू च बहोः" (पा. ६.४.१५८) इति सूत्रेण बहोः उत्तरस्य इमन्प्रत्ययस्य इकारलोपो बहुशब्दस्थाने भूशब्दादेशे च कृते "भूमन्" इति प्रातिपदिकं सिध्यति। भूमशब्दस्य भावार्थविहितइमन्प्रत्ययान्तत्वाद् बहुत्ववाचकं प्रसिद्धम्। किञ्च "स य एषोऽणिमा" (छा. ६.८.७) इत्यत्र अणिमशब्दस्य भाववाचकस्य आत्मरूपधर्मिपरत्वं यथा तथा "यो वै भूमा तत्सुखम्" (छा. ७.२३.१), "यो वै भूमा तदमृतम्" (छा. ७.२४.१) इत्यादिधर्मिसामानाधिकरण्याद् धर्मवाचकस्य भूमशब्दस्य धर्मिपरता सिद्धा। प्रकृते भूमशब्दस्य बहुत्वं न संख्यारूपम्, अपि तु "बह्वन्नं प्रच्यते" इत्यत्र इव आधिक्यरूपम्। "अथ यदल्पं तन्मर्त्यम्" (छा. ७.२४.१) इति अल्पस्य भूमप्रतिद्वन्द्विताबोधनात्।

**विषयवाक्यविचारः**

अस्मिन्नधिकरणे छान्दोग्योपनिषदः सप्तमाध्याये स्थितं “भूमा त्वेव विजिज्ञासितव्यः” (७.२३.१) तथा “यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्” (छा. ७.२४.१) इति वाक्यद्वयं विषयवाक्यं भवति।

तत्रायं प्रसङ्गः – नारदः खलु कृतकृत्यः देवर्षिः कर्मविदनात्मवित्तया आत्मानं शोच्यं मन्यमानः आत्मज्ञम् आजानसिद्धं महायोगिनं ब्रह्मिष्ठं भगवन्तं सनत्कुमारम् उपससाद। उपसद्य स नारदः उवाच – भगवन् ! अनात्मज्ञताजनितशोकसागरपारम् उत्तारयतु मां भगवान् इति। तदा न्यायतः उपसन्नं नारदं सनत्कुमारः उवाच – आत्मविषये त्वं यत्किञ्चित् जानासि, तद्वद। तदनु अहं भवतः विज्ञानात् तुभ्यम् ऊर्ध्वं वक्ष्यामि इति।[1] सनत्कुमारेण पृष्टः नारदः वदति –“**ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्त्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद्भगवोऽध्येमि**[2]” इत्युक्त्वा नारदः पुनः वदति यत् – “**सोऽहं भगवो मन्त्रविदेवास्मि नात्मवित्**[3]” इति। किन्तु मया भगवद्दृशेभ्यः साक्षात्कृतधर्मेभ्यः श्रुतमस्ति यत् – “**तरति शोकम् आत्मवित्**[4]” इति। अहं केवलं मन्त्रवेत्ता अस्मि, आत्मवेत्ता नास्मि तस्मात् अहं शोचामि। एतादृशं मां शोकस्य पारं तारयतु इति नारदः निवेदयति।[5] श्रुत्वैतत् सनत्कुमारः वदति यत् त्वया यद् अध्ययनं कृतं तत्सर्वं “नाम” अस्ति। ऋग्वेदादि सर्वं नाम एव

---

1 *“अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तं होवाच यद्वेत्थ तेन मोपसीद ततस्य ऊर्ध्वं वक्ष्यामीति स होवाच॥ - छा. ७.१.१*

2 *छा. ७.१.२*

3 *छा. ७.१.३*

4 *छा. ७.१.३*

5 *“सोऽहं भगवो मन्त्रविदेवास्मि नात्मविच्छ्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति” - छा. ७.१.३*

अस्ति। अतः नाम्नः उपासनां कुरु – “**नामैवैतन्नामोपास्स्वेति**[6]”। एतच्छ्रुत्वा नारदस्य पुनं प्रश्नः – “किं नाम्नोऽस्ति भूयः” इति। तत्र सनत्कुमारस्य प्रतिवचनम् – “वाग्वाव नाम्नो भूयसी”, अतः वाचम् उपास्स्व इति। नारदः पुनः पृच्छति – अयं प्रश्नोत्तरक्रमः भूमपर्यन्तं गच्भति।

**संशयः**

अत्र भूमा किंस्वरूप इति विशेषाकाङ्क्षायां सन्निधिप्रमाणेन सन्निहितः प्राणो भूमा इति भाति। “श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवित्” (छा. ७.१.३) इति वाक्योपक्रमस्थ आत्मा व्यवहितप्रकरणप्रमाणेन भूमा भवितुमर्हति इति च भाति। अतः किं सन्निधिप्रमाणेन प्राणो भूमा स्याद् उत प्रकरणप्रमाणेन परमात्मा भूमा स्यादिति संशयः।

**सङ्गतिविमर्शः**

पूर्वम् आत्मशब्दात् द्युभ्वाद्यायतनं ब्रह्म इति उक्तम्। तन्न सम्भवति, “तरति शोकमात्मवित्” इत्यत्र अब्रह्मणि अपि प्राणे आत्मशब्दप्रयोगात्, इति पूर्वाधिकरणेन अस्य अधिकरणस्य आक्षेपसङ्गतिः।

**फलविमर्शः**

पूर्वपक्षे प्राणोपास्तिः, सिद्धान्ते ब्रह्मप्रमितिरिति फलभेदः।

**पूर्वपक्षः**

1. प्राणो भवितुमर्हति। तथा हि –“अस्ति भगवो नाम्नो भूयः” (छा. ७.१.५) “वाग्वाव नाम्नो भूयसी” (छा. ७.२.१) “अस्ति भगवो वाचो भूयः” (७.२.२) “मनो वाव वाचो भूयः” (छा. ७.३.१) इत्येवं क्रमेण नाम आरभ्य प्राणपर्यन्तं भूयः प्रश्नप्रतिवचनपरम्परा प्रवृत्ता। अस्ति भगवः प्राणाद् भूय इति अदो वाव प्राणाद्भूय इति प्राणात्परं भूयः प्रश्नप्रतिवचनं न उपलभ्यते। नामाद्याशान्तमुक्त्वा ततः “प्राणो वावाशायाः भूयान्” (छा. ७.१५.१) इति प्राणमेव भूयांसं प्रतिपाद्य, नामाद्याशान्तान्

[6] *“नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्त्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्स्वेति” - छा. ७.१.४*

उपास्यान् अतीत्य प्राणमेव श्रेष्ठं वदति इति प्राणविद् अतिवादी इति तं प्रति "अतिवादी असि" इति केनचन दूषणे कृते सति "अतिवादी अस्मि" इति ब्रूयात् "नाहम् अतिवादी" इति अपह्नवं न कुर्यादिति प्राणोपासकस्य अतिवादित्वं श्रुतिः अभ्यनुजानाति। तस्मात् प्राणो भूमा भवितुमर्हति।

2. प्राणविदः अतिवादित्वनिरूपणानन्तरम् "एष तु वा अतिवदति यः सत्येनातिवदति" (छा. ७.१६.१) इति सत्यविज्ञानेन अतिवाअदित्वमभिधाय सत्यादिपरम्परया अवतार्यमाणो भूमा प्राणाद्व्यतिरिक्तः परमात्मा एव भवितुमर्हति इति न च शङ्कनीयम्। लोके यथा "एष अग्निहोत्री यः सत्यं वदति" इत्यभिहिते अग्निहोत्रेण एव अग्निहोत्रित्वमभिधीयते न सत्यभाषणेन, सत्यभाषणं तु अग्निहोत्रिणो विशेषगुण इति प्रतिपाद्यते, तथा "एष तु वा अतिवदति यः सत्येनातिवदति" इत्युक्ते पूर्वोक्तप्राणविदः प्राणविज्ञानेन एव अतिवादित्वमभिधीयते न सत्यवदनेन इति सत्यभाषणं प्राणविदो विशेष इति वक्तुं शक्यत्वात्। तस्मात् "एष तु वा अतिवदति यः सत्येनातिवदति" इत् प्राणव्रतमतिवादित्वमनूद्य प्राणविदः सत्यादिसाधनपरम्परामादिश्य अवतार्यमाणो भूमा प्राण एव न परमात्मा इति ज्ञायते।

3. किञ्च प्राण एव भूमा इति अङ्गीक्रियमाणे "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" (छा. ७.२४.१) इति भूम्न उच्यमानं लक्षणं न घटते – इति न वाच्यम्। सुषुप्त्यवस्थायां चक्षुरादिषु इन्द्रियेषु मुख्यप्राणेन ग्रस्तेषु सत्सु चाक्षुषज्ञानादिसर्वव्यवहाराभावात् प्राणस्यापि "यत्र नान्यत्पश्यति" इति लक्षणं सम्भवति।

4. अपि च यत् "यो वै भूमा तत्सुखम्" (छा.) इति भूम्नः सुखरूपत्वं प्रतिपादित तदपि प्राणस्य न विरुध्यते। "अत्रैष देवः स्वप्नान्न पश्यत्यथ यदेतस्मिञ्शरीरे सुखं भवति" (प्रश्न. ४.६) इति सुषुप्तिदशायामेव सुखप्रतिपादनात् इयं श्रुतिः प्राणस्य सुखत्वं गमयति।

5. "प्राणो वै अमृतम्" (कौ. ३.२) इति प्राणस्य अमृतत्वश्रवणात् "यो वै भूमा तदमृतम्" इति उक्तं तदमृतत्वमपि प्राणस्य अविरुद्धम्।

6. न चैवं शङ्कनीयं यत्प्रकरणस्योपक्रमे "तरति शोकमात्मवित्" (छा. ७.१.३) इति आत्मविविदिषया इदं प्रकरणम् उत्थितम्। अतोऽवसाने प्रतिपाद्यमानो भूमा आत्मा एव भवितुमर्हति, न तु प्राणः – इति। "प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः" (छा. ७.१५.१) इत्यत्र प्राणस्य सर्वात्मत्वश्रवणात्। "यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितम्" (छा. ७.१५.१) इति अरनाभिनिदर्शनेन सर्वाधारत्वश्रवणाच्च वैपुल्यात्मकभूमरूपत्वस्य प्राणे सम्भवात्।

तस्मात् प्राण एव भूमा – इति पूर्वः पक्षः।

**अत्र सिद्धान्तः**

**"भूमा सम्प्रसादाध्युपदेशात्"। इति सिद्धांतसूत्रम्**

1. परमात्मा एव भूमा भवितुमर्हति। सम्यक् प्रसीदति अस्मिन् जीव इति सम्प्रसादः, सुषुप्त्यवस्था, तस्यां मुख्यप्राणो जागर्ति इति सम्प्रसादशब्देन मुख्यप्राण उच्यते। तस्मात् ऊर्ध्वं प्राणोपदेशात् भूमा परमात्मा एव।
2. नारदसनत्कुमारयोः संवादे प्राणाद् ऊर्ध्वं भूयः प्रश्नप्रतिवचनाभावात् भूमा प्राणाद् न अर्थान्तरमिति यदुक्तं तन्न उपपद्यते। न हि सर्वत्र प्रश्नप्रतिवचनात्मिका एव अर्थान्तरविवक्षा भवति इति नियमोऽस्ति।
3. अस्य प्रकरणस्य उपक्रमे "सोऽहं भगवो मन्त्रविदेवास्मि नात्मविच्छ्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मिविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु" (छा. ७.१.३) इति नारदः वक्ति तदा सनत्कुमारः तं नारदं नामाद्याशान्तम् उपदिदेश। प्राणोपदेशानन्तरं तूष्णींभूते नारदे, विकारमिथ्यारूपेणप्राणविषयकविज्ञानेन अतिवादित्वम् अनतिवादित्वमेव, सत्यब्रह्मविषयकविज्ञानेन अतिवादित्वमेव अतिवादित्वमिति, परमात्मज्ञानं विना शोकनिवृत्त्यभावात् शोकनिवृत्तिकारणं पृष्टवते नारदाय परमात्मन एव उपदेष्टव्यत्वमिति च विचिन्त्य वास्तवातिवादित्वकारणीभूतसत्य-

विज्ञानाय “सत्यं त्वेव विजिज्ञासितव्यम्” (छा. ७.१६.१) इति सनत्कुमारस्य उपदेशः पूर्वोक्तप्राणाद् अर्थान्तरस्य विवक्षां गमयति।

4. “एष तु वा अतिवदति यः सत्येनातिवदति” (छा. ७.१६.१) इत्यनेन प्राणविदः अतिवादित्वम् अनुकृष्य प्राणविदः सत्यभाषणं विशेषो बोध्यते इति प्राण एव भूमा इति यदुक्तं तन्न। “एष तु वा अतिवदति यः सत्येनातिवदति” इति यः सत्येन अतिवदति सः अतिवादी इति त्रिकालाबाध्यसत्यवस्तुविज्ञानेन सत्यविदः अतिवादित्वं, तुशब्देन प्राणविदः अतिवादिनः सकाशात् प्रकृत्य सत्यविज्ञानेन अतिवादिनः व्यावृत्तिम् अतिशयितत्वं च प्रतिपाद्य, सत्याधिगमोपायत्वेन कृतिशब्दितेन्द्रियसंयमादिकं निष्ठाशब्दितगुरुशुश्रूषादिपरतां श्रद्धाशब्दितमादरमतिशब्दितमननं विज्ञानशब्दितध्यानं च प्रतिपाद्य, तेषां साधनानां सम्पादनीयत्वमुक्त्वा, “सुखं त्वेव विजिज्ञासितव्यम्” (छा. ७.२२.१) इति सत्यवस्त्वात्मक आनन्द एव विजिज्ञासितव्य इत्युक्त्वा, स एव भूमा इत्युपदिश्यते। अतः प्राणाद् अधि उपदिश्यमानो भूमा परमात्मा एव।

5. किञ्च, प्रकरणप्रमाणापेक्षया सन्निधिप्रमाणस्य दुर्बलत्वेन प्रकरणं व्यवहितमपि प्राणप्रापकसन्निधिं बाधित्वा आत्मानं समर्पयति इति भूमा परमात्मा एव।

6. “यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा” (छा. ७.२४.१) इति भूमनि दर्शनादिसर्वव्यवहाराभावो बोध्यते। स च भूमशब्देन परमात्मपरिग्रहे एव घटते। यतः “यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्” (बृ. ४.५.१५) इति श्रुत्यन्तरं परमात्मन्येव दर्शनादिसर्वव्यवहाराभावः स आत्मान एव असङ्गत्वाभिप्रायेण उक्तः न प्राणस्वभावाभिप्रायेण। सुषुप्त्यवस्थायां यत् सुखमुक्तं तदपि आत्मन एव सुखरूपत्वाभिप्रायेण उक्तम्, यतः “एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति” (बृ. ४.३.३२) इति श्रुत्यन्तरम् आत्मन एष

सुखरूपत्वं बोधयति। अत्रापि "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखम्" (छा. ७.२३.१) इति ब्रह्म एव सुखं भूमा इति बोध्यते। तस्मात् परमात्मा एव भूमा भवितुमर्हति।

7. अपि च, "यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम्" (छा. ७.२४.१) इति भूम्नः अमृतत्वस्य प्राणादिसर्वविकाराणां विनाशित्वस्य च बोधनेन "प्राणो वा अमृतम्" (कौ. ३.२) इति प्राणे उच्यमानम् अमृतत्वम् आपेक्षिकमेव न तु मुख्यम्, अतः प्राण भूमा न भवितुमर्हति।

8. किञ्च पूर्वपक्षिभिः प्राणस्य सर्वात्मत्वं सर्वाधारत्वं च यदुक्तं तदपि नोपपद्यते। चेतनस्य संसारितादशायां सर्वोऽपि व्यवहारः प्राणोपाधिनिबन्धन एव इति प्राणस्य पित्रादिसर्वात्मकत्वं सर्वाधारत्वं च उक्तमिति मन्तव्यम्। तस्मात् परमात्मा एव भूमा सिध्यति।

अपि च परमात्मा एव भूमा अस्ति इत्यत्र युक्त्यन्तरमस्ति – **"धर्मोपपत्तेश्च"** इति।

9. "यत्र नान्यत् पश्यति" (छा. ७.२४.१) इत्यादिना उक्तानां सर्वव्यवहाराभावादिरूपाणां धर्माणां परमात्मनि एव उपपत्तेः कारणात् परमात्मा एव भूमा इति सिद्धान्तः।

इत्थं भूमशब्दस्य ब्रह्मपरत्वानिश्चिते सति अत्र कैवल्यहेतुभूता ब्रह्मप्रमितिरापे प्रयोजनत्वेन सिद्धा भवति इति दिक्।।



# संस्कृते आदरसूचनपद्धतिः

**डॉ. दीपेश विनोद कतिरा**

सहायक-प्राध्यापकः

भारतीय-ज्ञानप्रणाली-उत्कृष्टता-केन्द्रम्

भारतीय-प्रौद्योगिकी-संस्थानम्, खड़गपुरम्

## ०. भूमिका –

०.१. विभिन्नासु भाषासु विभिन्नैः प्रकारैः आदरः सूच्यते। संस्कृते यस्मै आदरः दातुम् इष्यते तस्य नाम्ना सह 'महोदयः', 'महाभागः' इत्यादिशब्दाः समस्यन्ते, यथा 'गान्धिमहोदय' इत्यत्र। क्वचित् पाद-चरणादीन् शब्दान् संयोज्य बहुवचनान्ताः प्रयोगाः क्रियन्ते, यथा 'पितृपादाः', 'स्वामिचरणाः' इत्यत्र। क्वचित् आदरवाचकानां विशेषणानां टाईटल-रूपेण प्रयोगः क्रियते, यथा 'आर्यः सुमन्त्रः' इत्यत्र। अदरद्योतनाय आत्मनि बहुवचनप्रयोगः अपि बहुत्र दृग्गोचरोः भवति यथा 'कुर्मः प्रौढमनोरमाम्[१]' इत्यत्र। बहुवचनप्रयोगमात्रेणापि आदरः सूच्यते बहुधा, 'नत्वा वरदराजः श्रीगुरून् भट्टोजिदीक्षितान्[२]' इत्यत्र यथा। मध्यमपुरुषस्य वाचकानि यानि सर्वनामपदानि सन्ति तेषु अपि कानिचित् आदरं द्योतयन्ति। अस्मिन् शोधपत्रे केवलम् आदरद्योतकानां मध्यमपुरुषस्य वाचकानां सर्वनामपदानाम् एव चिन्तनं करिष्यते।

०.२. हिन्द्यादिषु भाषासु मध्यमपुरुषाय कतिपयसर्वनामानि उपलभ्यन्ते। यथा 'तू', 'तुम' तथा 'आप'। एतेषां सर्वनाम्नां प्रयोगक्षेत्रम् अपि सुनिर्धारितं वर्तते। कस्मिन् सन्दर्भे कस्य सर्वनाम्नः प्रयोगः करणीयः इति निश्चितं वर्तते। तत्र 'तू' इति मध्यमपुरुषस्य वाचकं भवति, किन्तु तत्र

---

*१ प्रौढमनोरमायाः मङ्गलाचरणे।*

*२ मध्यसिद्धान्तकौमुद्याः मङ्गलाचरणे।*

आदरस्य नितान्तम् अभावः वर्तते। निकृष्टस्य वा कनिष्ठस्य वा मध्यमपुरुषस्य कृते यदा आदरः सर्वथा द्योतयितुं न इष्यते तदा 'तू' इत्येतत् प्रयुज्यते। स्वेन समानस्य मध्यमपुरुषस्य कृते 'तुम' इति इदं सर्वनाम प्रयुज्यते। 'आप' इत्येतत् 'तुम' इत्यस्यैव आदरवाचकं बहुवचनम् अस्ति। आङ्ग्लभाषासदृशीषु कासुचित् भाषासु मध्यमपुरुषे आदरसूचकसर्वनामानि नैव सन्ति। तत्र टाईटल-प्रयोगेण एव आदरसूचनं क्रियते। सर्वनामभिः तत्र आदरसूचनं सर्वथा अशक्यम्। संस्कृते मध्यमपुरुषस्य वाचकानि अधो लिखितानि सर्वनामानि उपलब्धानि सन्ति –

- युष्मद्
- युष्मद् इत्यस्य आदरार्थकं बहुवचनम्
- भवत् (भवान्/भवती)
- भवत् इत्यस्य आदरार्थकं बहुवचनम्
- अत्रभवत्, तत्रभवत्, सभवत् च

तस्मात् संस्कृतविषये इयं शङ्का उत्पद्यते यत् 'किम् उपर्युक्तेषु प्रत्येकं शब्दः आदरस्य भिन्नं स्तरं द्योतयति अथवा एतेषु केचन शब्दाः अन्यैः समानार्थकाः?' पत्रेऽस्मिन् अस्याः एव शङ्कायाः समाधानाय यत्नो विहितो वर्तते।

### **१. आदरार्थं युष्मच्छब्दस्य बहुवचनप्रयोगः**

प्रेग्मेटिक्स एन्ड क्लासिकल संस्कृत इत्यस्मिन् ग्रन्थे लीव वेन् दे वाले महोदया लिखति यत् – 'त्वम्' इत्यस्य एकवचनान्तरूपस्य स्थाने विनम्रतां द्योतयितुं क्वचित् 'यूयम्' इति द्वितीयपुरुषस्य बहुवचनान्तं रूपं प्रयुज्यते (१९९३:१२२)। सा इदमपि वक्ति यत् अस्य रूपस्य प्रयोगः प्रशिष्टसाहित्यस्य अर्वाचीनेषु ग्रन्थेषु दृश्यते। तत्समये उच्यमानानां प्रादेशिकभाषाणां संस्कृते जातस्य प्रभावस्य कारणेन इदं जातं स्यात् इति सा भावयति। तया हितोपदेशात् उदाह्रियते -

- यूयं धर्माज्ञारता इति... पक्षिणः सर्वे सर्वदा ममाग्रे प्रस्तुवन्ति।

- युष्माभिरतिसञ्चयः कृतस्तस्यायं दोषः।

तया शाकुन्तलात् उदाह्रियते -

- आपन्नस्य विषयवासिनो जनस्यार्तिहरेण राज्ञा भवितव्यमित्येष वो धर्मः।

आधुनिकसाहित्ये बहुवचनान्तस्य युष्मद्-शब्दस्य आदरार्थे प्रयोगः चारुदेवशास्त्रिणा उदाहृतः -

- युष्मानहं पृच्छामि, आचष्टां भवान् मदुक्ते क्व विरोधोस्तीति। (वाक्यसंख्या १५०)

'संस्कृत सिन्टेक्स' इत्यस्मिन् ग्रन्थे स्पाये-महोदयेन दशकुमारचरितात् पञ्चतन्त्रात् च एतस्य कतिपयानि उदाहरणानि दत्तानि सन्ति। यद्यपि उदाहरणानि सीमितानि, तथापि पञ्चतन्त्रसदृशे प्राचीनग्रन्थे अपि उपलभ्यन्ते। **एतेन वक्तुं शक्यते यत् लीव वेन् दे वाले महोदया यथा अभिप्रैति तद्विपरीतम् आदरसूचनाय युष्मद्-शब्दस्य बहुवचनप्रयोगः अर्वाचीनभाषाप्रभावेन आरब्धः न स्यात् प्रत्युत अर्वाचीनभाषासु दृश्यमानः एतादृशप्रयोगः संस्कृतप्रेरितः भवितुम् अर्हति।**

## २. आदरद्योतनाय भवच्छब्दस्य प्रयोगः

२.१ भवत्-शब्दस्य विषये मोनियर विलियम्स कोषे इदं लिखितं वर्तते - your honour , your worship, your lordship or ladyship, you (lit. " the gentleman or lady present " ; cf. अत्र- and तत्र-भवत्° ; used respectfully for the 2nd pers. pron. , but properly with the 3rd and only exceptionally with the 2nd pers. of the verb e.g. भवान् ददातु , " let your highness give " ; sometimes in pl. to express greater courtesy e.g. भवन्तः प्रमाणम् , " your honour is an authority ") S3Br. &c.

२.२ वामन शिवराम आप्टे महोदयस्य कोषे इदं लिखितम् - आदर सूचक, या सम्मानसूचक सर्वनाम – जिसका अनुवाद है – 'आदरणीय श्रीमन्', 'पूज्य श्रीमती' (मध्यम पुरुष, पुरुषवाचक सर्वनाम के अर्थ में बहुधा प्रयुक्त, परन्तु क्रिया अन्य पुरुष की)। प्रायः इस के साथ 'अत्र' या 'तत्र' भी जोड़ दिया जाता है। कभी कभी 'स' के साथ लगा दिया जाता है – (उदा.) यन्मां विधेयविषये सभवान्नियुङ्क्ते (मालविकाग्निमित्रम्)।

२.३ स्पाये महोदयः इदं लिखति - When addressing in polite manner, one avails one's self of भवान्, f. भवती, plur. भवन्तः, f. भवत्यः...

२.४ आप्टेप्रणीते संस्कृत-निबन्ध-पथप्रदर्शके उच्यते यत् – जिस को संबोधित कर के बातचीत की जाती है उसके प्रति, शिष्टाचार दर्शाने के लिये 'भवत्' शब्द प्रयोग में लाया जाता है।

२.४ Pragmatics and Classical Sanskrit (Lieve Van de Walle) – In Sanskrit two **pronouns** used most frequently to address a second person are *tvam* (2nd. Sing) and a honorific term in the third person singular or plural usually *bhavān*(s.) /*bhavantas*(pl.)

२.५ तत्रेदम् अवधेयं यत् स्पायेमहोदयः कथयति - Both modes of expressing the 2nd person, either by the pronoun त्वम् or by the **title** भवान् may be used promiscuously. अपि च आप्टेमहाभागस्य कथनं वर्तते यत् – "ऐसे प्रयोग में यह आवश्यक नही है कि संबोधित व्यक्ति के प्रति आदर दिखाया जा रहा है"।

२.६ यदि युष्मद्-भवत्-सर्वनाम्नोः प्रयोगः अनियमिततया भवति तर्हि तद्विषये द्वौ प्रश्नौ उद्भवतः -

**क. अस्याः अनियमिततायाः प्रमाणं कियत्?**

**ख. कोषकाराः 'भवत्'-शब्दस्य आदरसूचकत्वं कथं निर्णीतवन्तः?**

एतद्विषये कतिचन उदाहरणानि इत्थं सन्ति –

**२.६.१ प्रथमम् उदाहरणम् -**

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम्।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता॥ (दृश्यताम् - श्रीमद्भगवद्गीता १.३)
भवान् भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः।
अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च॥ (दृश्यताम् - श्रीमद्भगवद्गीता १.८)

उभयत्र द्रोणाचार्यं प्रति दुर्योधनस्य उक्तिः वर्तते। प्रथमे पद्ये तस्य एव 'तव' शब्देन उल्लेखः कृतः। अपरत्र 'भवत्'-शब्दस्य प्रयोगः आचार्यस्य कृते दुर्योधनेन कृतः। एषः व्यत्यासः कथं समाधेयः?

प्रायः एवं वक्तुं शक्यते यत् – पूर्वत्र दुर्योधन आक्षेप्तुकामः अतः तत्र आदराभावः स्यात्। परत्र तु सः आचार्यं द्रोणं स्वस्य सेनायाः प्रधानयोधृषु अन्यतमत्वेन परिगणयति स्म। अतः तत्र आदरेण भवच्छब्दं प्रयुङ्क्ते।

**२.६.२ द्वितीयम् उदाहरणम् -**

परं ब्रह्म परं धाम पवित्रं परमं भवान्।

पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम्॥

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा।

असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे॥ (दृश्यताम् - श्रीमद्भगवद्गीता १०.११, १०.१२)

अत्र भगवतः कृष्णस्य कृते प्रथमे पद्ये 'भवान्' इति शब्दः प्रयुक्तः। द्वितीये पद्ये तस्य एव भगवतः कृष्णस्य सन्दर्भे 'त्वाम्' इति शब्दः प्रयुक्तः। अत्र युष्मद्-भवतोः प्रयोग-सन्दर्भः अपि समानः अस्ति इति वयं द्रष्टुं शक्नुमः।

**२.६.३ तृतीयम् उदाहरणम् –**

आख्याहि मे को भवानुग्ररूपोनमोऽस्तु ते देववर प्रसीद।
विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम्। (दृश्यताम् – श्रीमद्भगवद्गीता ११.३१)

अत्र समाने पद्ये युष्मद्-भवतोः प्रयोगः दृग्गोचरः भवति। द्वौ अपि शब्दौ अत्र पर्यायरूपेण प्रयुक्तौ दृश्येते। अभिजातसाहित्ये पुराणसाहित्ये च युष्मद्भवतोः ईदृशः पर्यायतया प्रयोगः असकृत् गोचरो भवति। पञ्चतन्त्रे दमनकः सिंहं प्रति वदति, "सञ्जीवकः शष्पभोजी भवान् मांसादस्तव प्रकृतयश्च" इति। स्पाये महोदयः गृह्यसूत्रात् तादृशम् एकम् उदाहरणं ददाति यत्र भवच्छब्दप्रयोगः सिप्प्रत्ययवता क्रियापदेन समं दृश्यते – "ब्रह्मचारी भवान् ब्रूहि" इति। युष्मद्-भवतोः ईदृशः पर्यायतया प्रयोगः आधुनिकसंस्कृतसाहित्ये न दृश्यते, न वा अनुमन्यते। सम्प्रति युष्मद् = तु-पर्यायः, भवत् = आप-पर्यायः इत्येवम् आधुनिकसंस्कृतसाहित्ये प्रयोगः भवति। हान्स हेनरिच हॉक महोदयः लिखति यत् - This interchangeability of युष्मद् and भवत् is no longer acceptable in contemporary Spoken Sanskrit. The modern use of this construction type strongly resembles the use of the honorific pronoun आप in Hindi.

२.६.४ यदि युष्मद्-भवतोः पर्यायतया उपयोगः भवति तर्हि कोषकाराः भवच्छब्दस्य आदरसूचकत्वं कथं निर्णीतवन्तः इति शङ्का उत्पद्यते एव। भगवता पाणिनिना 'भवतु'-शब्दः सर्वादिगणे पठितः। वामन शिवराम आप्टे महाभागः 'भवत्'-विषये 'आदरसूचक सर्वनाम' इति लिखति।

वाचस्पत्ये उच्यते यत् भवच्छब्दः भूधातोः डवतुप्रत्यये कृते निष्पन्नो भवति। भवच्छब्दः 'सर्वनाम' अस्ति इति स्पायेमहोदयः न क्वापि अङ्गीकरोति। तस्य मते भगवान्, आर्यः, देवः, आयुष्मान् इत्यादिशब्दवत् भवच्छब्दः अपि 'टाईटल' अथवा आदरवाचकं विशेषणम् अस्ति। स्पाये-महोदयेन वाले-महाभागया च मन्यते यत् 'भवान्' इत्येतत् 'भगवान्' इत्येतस्य वेदेषु असकृत् प्रयुक्तस्य टाइटल इत्यस्य संक्षिप्तं रूपं वर्तते। स्पाये अन्य टाईटल अपेक्षया 'भवत्' इत्यस्य विशेषम् अपि कथयति – "other titles may denote third person as well as second person, but भवत् is only fit for denoting the second person" इति। इत्थं भवच्छब्दविषये पारम्परिकाधुनिकविदुषोः दृष्टिः भिद्यते। पारम्परिकाः मन्यन्ते यत् मध्यमपुरुषाय युष्मद्, भवत् चेति द्वे सर्वनाम्नी उपलभ्येते। तत्र युष्मद् औत्सर्गिकं वर्तते, भवत् च आदरसूचकं वर्तते। आधुनिकास्तु मन्यन्ते यत् युष्मद् सर्वनाम वर्तते, भवत् तु टाईटल अथवा विशेषणं वर्तते। इत्थम् उभयोः अपि प्रकारः भिन्नः अतः तयोः पर्यायेण प्रयोगो भवितुमर्हति। भवत् इत्येषः शब्दः 'भगवत्' इत्येतस्मात् शब्दात् उद्भूतः। अतः यथा भगवच्छब्दः आदरसूचकं विशेषणं वर्तते, तथैव भवच्छब्दः अपि।

**३. भवच्छब्दस्य बहुवचनप्रयोगः –**

स्पायेमहोदयः कथयति यत्, "It is a token of great respect if one is addressed by plural of personal pronoun यूयम् or भवन्तः instead of त्वम् or polite भवान्"। कतिपयोदाहरणानि –

हितोपदेशे – राजा ब्राह्मणाय - प्रागेव किं नोक्तं भवद्भिः।

हितोपदेशे – बिडालः अन्धाय गृध्राय – अतो भवद्भ्यो विद्यावयोवृद्धेभ्यो धर्मं श्रोतुमागतः।

शाकुन्तले - शार्ङ्गरवः दुष्यन्ताय – श्रुतं भवद्भिः ।[३]

### ४. अत्रभवान्, तत्रभवान्, सभवान् च –

स्पायेमहोदयः आह – “सभवान् and तत्रभवान् point out somebody absent. The two above refer only to third person. अत्रभवान् always points out someone who is present”. It may refer to 2nd or 3rd person”. अमीषां त्रयाणामपि शब्दानां विषये शङ्का उत्पद्यते यत् किम् एते त्रयः समासाः आहो स्वित् पृथक् पृथक् शब्दाः। एतद्विषये स्पाये आपटे च मन्यते यत् अत्रभवत्/तत्रभवत् इत्येषः समासः। वाचस्पत्यानुसारम् अत्रभवत् तत्रभवत् इत्येतौ नित्यसमासौ। सामासिकः सभवान् इति शब्दः असाधुः इति आप्टेमहोदयः कथयति। मालविकाग्निमित्रे वर्तमाने ‘मां सभवान् नियुङ्क्ते’ इत्यस्मिन् प्रयोगे ‘सः भवान्’ इत्येषः पदसमूहः। तत्र ‘एतत्तदो सुलोपोऽकोरनञ्समासे हलि’ इति सूत्रेण विसर्गप्रयोगाभावः वर्तते। महाभारते ‘स भवान्’ इत्यस्य नैकानि उदाहरणानि सन्ति।

### ५. अत्रभवन्तो भवन्तः

चारुदेवशास्त्रिप्रणीते वाग्व्यवहारादर्शे तेन इदं वाक्यम् उदाहृतम् - “किं न पश्यन्ति तत्र भवन्तो भवन्तोऽक्षोदक्षमोयमर्थ इति” अस्य वाक्यस्य विषये चारुदेवशास्त्रिणा उच्यते, “तत्र भवान् इति पदसमुदायः पूज्यवचन इति काव्यनाटकादीनां व्याख्यातारः। एतमर्थमाश्रित्य केचिदाधुनिकास्तत्रभवन्त इत्यतोऽनन्तरं भवन्त इति सर्वनाम प्रयुञ्जते। सैषा तेषाम्मसमीक्ष्यकारित। साहित्ये तु ततः परं नाम्न एव प्रयोगो दृश्यते। तत्र भवान् कालिदास इत्यादौयथा। तत्रपदसन्निधाने पूज्यार्थाभिधानेऽपि भवच्छब्दः सर्वनामत्वं न

---

[३] *सर्वाणि अपि एतानि उदाहरणानि ‘संस्कृत सिन्टेक्स्’ इति ग्रन्थे स्पाये-महोदयेन यथा उदाहृतानि तथैव स्वीकृतानि सन्ति*

जहाति। सर्वनाम्नो द्विरुक्तिस्तु न दृष्टाऽन्यत्र वीप्सायाः। तेन द्वितीयं भवन्त इति पदं त्याज्यम्। एतेन ज्ञायते यत् चारुदेवशास्त्रिणां मतमिदं वर्तते -

- भवत् इत्येतत् सर्वनाम (न तु विशेषणम्)
- तत्रभवत् इत्येष पदसमूहः न तु समासः
- 'तत्र' तथा 'भवत्' इत्येतौ सहप्रयुक्तौ आदरं द्योतयतः
- 'तत्रभवत्' इत्यपि टईटल नास्ति
- 'तत्रभवत्' इति पदसमूहे अपि भवत् इत्यस्य सर्वनामता न व्याहन्यते
- तत्रभवन्तो भवन्तः इति प्रयोगः दोषास्पदम्

**६. उपसंहारः**

आधुनिकसंस्कृतसाहित्ये मध्यमपुरुषाय –

- 'त्वम्' इति इत्येतत् औत्सर्गिकं सर्वनाम
- 'यूयम्' इति एकस्य जनस्य कृते आदरसूचकतया प्रयुज्यते
- भवत् इति पारम्परिकाणां कृते सर्वनाम, आधुनिकानां कृते टाईटल वर्तते
- भवत् इत्यस्य प्रयोगः मध्यमपुरुषवाचकः अपि, आदरवाचकः अपि
- भवत् इत्यस्य बहुवचनस्य प्रयोगः एकस्य कृते आदरसूचनाय शक्यः, किन्तु एकवचनस्य प्रयोगेण आदरहानिः कापि न भवति (दृश्यतां 'शुद्धिकौमुदी')
- अत्रभवत्, तत्रभवत् सभवत् इत्येते स्पायेमहाभागानुसारं आप्टेमहाभागानुसारं च समासाः, चारुदेवशास्त्र्यनुसारं पदसमूहाः

प्रायेण आधुनिकलेखकेषु अधस्तनशब्दैः उत्तरोत्तरम् अधिकः आदरः सूच्यते इति भावः वर्तते। तद्यथा

- त्वम् इत्यत्र आदराभावः
- यूयम् / भवान् इत्येतौ कञ्चित् आदरं गमयतः

- अत्रभवान् / भवन्तः इत्यनेन आदराधिक्यं गम्यते
- अत्रभवन्तः इत्येषः आदरातिशयं सूचयति
- अत्रभवन्तो भवन्तः इत्यनेन इतोऽधिकः आदरः सूचयितुं शक्यते

आधुनिकलेखकानाम् इयं धारणा मित्या वर्तते।

वस्तुतस्तु -

- त्वम् इत्येतत् मध्यमपुरुषाय प्रयुज्यमानं सर्वनाम वर्तते। अस्य प्रयोगे अदराभावः कोपि नास्ति।
- भवत् इत्येष त्वम् इत्यस्य अपेक्षया अधिकमादरं सूचयति
- अत्रभवत् इत्यनेन भवत् इत्यस्य अपेक्षया अधिकः आदरः सूच्यते इत्यत्र किमपि प्रमाणं नास्ति
- यूयम् अथवा भवन्तः/भवत्यः इत्यस्य प्रयोगः आदरातिशयद्योतनाय भवितुमर्हति
- अत्रभवन्तो भवन्तः इत्येष प्रयोगः अभिजातसाहित्ये अनुपलब्धत्वात्, चारुदेवशास्त्रिणा च दूषितत्वात् असाधुः



# ग्रहणविमर्शः

**डॉ. नित्यानन्दः ओझा**
सहायकाचार्यः, ज्योतिषविभागः,
श्रीसोमनाथसंस्कृतयुनिवर्सिटी वेरावलम्

वस्तुतः दृग्गोचरीभूयमानासु घटनासु सर्वतोऽभ्यधिकं विस्मयदायकं कूतुहलोत्पादकं च रविचन्द्रग्रहणमेव। चक्षुष्मान् कोऽपि प्राण्येतदभिमुखमावर्जनमन्तरेण स्थातुं न प्रभवति। यदा कदा त्विदं भयावहमपि प्रतीयते। जगतः प्रकाशदात्रोः सूर्यचन्द्रमसोरकस्मादेतादृशं परिवर्तनं यदर्थं प्राणिनिवहः पूर्वतः सावधानो न भवेत् भयविस्यमयोर्हेतुतया पर्यवसितं भवितुर्महत्येव। क्षणं स्मरन्तु भवन्तस्तदानीन्तनानां मानवानां मनः स्थितिं ये किल सर्वप्रथमं प्रदीप्तकरजालैर्देदीप्यमानेन भास्वता सकाशितस्य नभसः सहसा तारासंकुलितत्वं सकलकलस्य पौर्णमासीचन्द्र-मसोरकस्मात् कान्तिराहित्येन चन्द्रिकाचर्चिताया राकायस्तमिश्रासंवलितत्वं दर्शितवन्तो भवेयुः। येषां च किलास्या घटनायाः कारणस्य लेशमात्रमपि ज्ञानं नासीत। इदानीं यदा वयं विषयेस्मिन् सर्वांशेनाधीतिनः स्मः। सर्वग्राससूर्यग्रहणवेलायां चन्द्रच्छायायामस्माकमाकस्मिकः प्रवेशोऽस्मान् भावयत्येव, वेदकाले पूर्णं सूर्यग्रहणं समवलोक्य मानवाः किमन्वभूवन्? अस्य कारणं किमाकारकं समवगतमकुर्वत्? इदम् ऋग्वेदस्य निम्ननिर्दिष्टमन्त्रे समवलोकनीयम्-

**यत् त्वा सूर्य स्वर्भानुस्तमसाविध्यदासुरः**
**अक्षक्षेत्रविद्यथा मुग्धो भुवनान्यदीधयुः॥**
**स्वर्भानोरध यदिन्द्र माया अवो दिवो वर्तमाना अवाहन्।**
**गुल्हं सूर्य तमसाऽपव्रतेन तुरीयेण व्रह्माण्डबिन्ददत्रिः॥**

वस्तुतः आकाशे सर्वेषां ग्रहाणां परस्परावरोधवशात् प्रत्यहं ग्रहणं जायते, परञ्च तेषां दूरत्वात् स्वनग्नचक्षुषा तेषामदृश्यत्वात्, तेषां प्रभावस्याच्चाभावात् सर्वेषां ग्रहणानां वर्णनं आचार्यैः न कृतमस्ति। तेषु ग्रहेषु

सूर्यचन्द्रयोः प्रत्यक्षीकरणत्वात् तयोः प्रभावस्य मानवजीवने अनुभूयत्वात् ग्रहणपदेन सूर्यचन्द्रयोः ग्रहणं ज्ञेयम्।

वस्तुतः मानवजीवने ग्रहणकालः शुभकार्ये निषिद्धास्ति कालेस्मिन् सुतको भवति सुतककालात् पूर्वपश्चाच्च क्रमेण ३,७ दिनानि त्याज्यः भवति-

**चन्द्रसूर्योपरागेषु त्र्यहं प्रागशुभं त्यजेत्।**
**सप्ताहमशुभं पश्चात्स्मृतं ग्रहणसूतकम्।।**[1]

सङ्ग्रहशिरोमणि नवमी प्रभा १६

कैश्चिदाचार्यैःग्रहणस्य ग्रासप्रमाणेन निषिद्धकालस्य निर्धारणं क्रियते। ग्रहणकाले विवाहसंस्कारः, व्रतबन्धादि संस्कारः त्याज्यः अस्ति। विवाहे मृत्युतुल्यं कष्टस्यादेशः आचार्येण कृतः वर्तते-

**यस्मिन्विधु राहुरिनं च धिष्णे गृह्णाति तत्त्याज्यमृतुत्रयं स्यात्।**
**पाणिग्रहे पुंमरणं विधत्ते द्वयोर्भयोश्चेद्द्वयमेव जह्यात्॥**[2]

सङ्ग्रहशिरोमणि नवमी प्रभा २६

एवमेवाचार्यैः ग्रहणसुतकस्य दोषस्य निर्धारणं प्रायशः मुहूर्तग्रन्थेषु कृतं वर्तते सम्प्रति न केवलं ग्रहणकालस्य दोषो एव विद्यते परञ्च अस्माकं भारतीयसंस्कृतौ जपानुष्ठानादिकार्ये ग्रहणस्यातीव महत्वं वर्तते। ग्रहणकाले दानादि कार्यस्य फलं श्रेयस्करं भवतीति पुराणेष्वपि विद्यते। नित्यनैमित्तिककाम्ये ग्रहणदोषो न भवति। प्रसङ्गेस्मिन् उक्तम्-

**नित्यनैमित्तिके काम्ये जपहोम क्रियासु च।**
**उपाकर्मणि चोत्सर्गे ग्रहदोषो न् विद्यते॥**[3]

सङ्ग्रहशिरोमणि नवमी प्रभा २५

---

*[1] संग्रहशिरोमणिः नवम् प्रभा श्लोक सं. १६, व्याख्याकरः आचार्य-श्रीकमलाकान्तशुक्लः, प्रकाशनम्- सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः वाराणसी, प्रकाशवर्षम्-१९९६*

*[2] संग्रहशिरोमणिः नवम् प्रभा श्लोक सं. २६, व्याख्याकरः आचार्य-श्रीकमलाकान्तशुक्लः, प्रकाशनम्- सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः वाराणसी, प्रकाशवर्षम्-१९९६*

*[3] संग्रहशिरोमणिः नवम् प्रभा श्लोक सं. २५, व्याख्याकरः आचार्य- श्रीकमलाकान्तशुक्लः, प्रकाशनम्- सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः वाराणसी, प्रकाशवर्षम्-१९९६*

इत्यनेन ग्रहणस्य ज्ञानस्यातीव महत्वपूर्णं दरीदृश्यते, अतएव ग्रहणस्य चर्चा अवस्यम्भावी वर्तते, अतः परं ग्रहणस्वरुपं विविच्यते –
गृह्णाति ग्रहणम्। गृह्यतेऽनेनेति व्युत्पत्या आकाशे भ्रमणवशात् यदा कोऽपि ग्रहबिम्बः कमपि ग्रहबिम्बमाच्छादयति तदेव ग्रहणम्। ग्रहणे छाद्यछादकयोः ज्ञानमावश्यकमस्ति। चन्द्रग्रहणे चन्द्रः छाद्यः भूभा च छादिका भवति। तथा च सूर्यग्रहणे सूर्यः छाद्यः चन्द्रश्च छादको भवति। अत्र छाद्यच्छादकयोः परस्परं संयोगवशात् चन्द्रग्रहणं पूर्णिमायां सूर्यग्रहणञ्चामायां भवति। यतोहि चन्द्रग्रहणे भूमिं परितो भ्रमन्तौ सूर्यचन्द्रौ यदा षडभान्तरितौ भवतस्तदा सूर्यचन्द्रयोर्मध्ये भूमिरागच्छति येन सूर्यस्य प्रकाशकिरणाः सूर्यादल्पपरिमाणकेन भूपिण्डेनावरुद्धाः आकाशेऽन्धकाररूपं सूचिक्षेत्रमुत्पादयन्ति। अत्र भूभाबिम्बस्य तमोरूपः एव राहुपदवाचको भवति।एषा तमोरूपा सूची सूर्यात् विरूद्धदिशि षड्-राश्यन्तरे दीर्घतया चन्द्रकक्षामतीत्य दूरं गच्छति। उक्तं च

**भानोर्बिम्बपृथुत्वादपृथुपृथिव्याः प्रभा हि सूच्याग्रा।**
**दीर्घतया शशिकक्षामतीत्य दूरं बहिर्याता॥**[४]

भूच्छायेव सूर्यतो जायमाना चन्द्रच्छायाप्याकाशे परिभ्रमति। अस्याः आकृतिरपि भूच्छाया समानैवाभिहितचरं यच्चन्द्रः पृथ्वीतोऽपि लघीयान्। अतस्तदुत्थाच्छायाऽकाशेऽतितरां लघुतमा भवति। किं बहुना , यदा कदाचिच्चन्द्रोऽतीवोच्छ्रितिभाग्भवति तदा तच्छाया भूचन्द्रयोरन्तरालतोऽपि लघीयसी भवति। तत्र स्वककक्षायां भ्रमन् चन्द्रः भूसूर्ययोर्मध्ये यदाऽयाति तदा चन्द्रस्यावरोधवशात् चन्द्र्त्पन्नच्छाया तदा भूपृष्ठोपरि निपतति तदा तदीयो यो भागस्तस्या अध्वनि निपतति तावति प्रदेशे सूर्यस्य भागः न दृश्यते तत्र सूर्यग्रहणं भवति। यदस्मच्चक्षुसूर्ययोरन्तराले यदा चन्द्रः समापतति तदा

---

[४] *सि. शि. ग्रहणवासना श्लोक सं. ५, व्याख्याकारः – श्रीकेदारदत्त-जोश्री,प्रकाशनम्- मोतीलाल बनारसीदास वाराणसी, प्रकाशनवर्षम्- २०१०*

रविश्चन्द्रमसा तथैव पिहितो भवति यथा स मेघैः पिधीयते। सिद्धान्तशिरोमणौ भास्करेण सूर्यग्रहणमधिकृत्येत्थमेवौपमितं विद्यते तद्यथा-

**पश्चाद् भागाज्जलदवदधः संस्थितोऽभ्येत्य चन्द्रो**
**भानोर्बिम्बं स्फुरदसितया छादयत्यात्ममूर्त्या**
**पश्चात् स्पर्शो हरिदिशि ततो मुक्तिरस्यात् एव**
**क्वापि च्छन्नः क्वचिदपिहितो नैष कक्षान्तरत्वात् ॥**[५]

वस्तुतस्तु रविचन्द्रयोः एकसूत्रे स्थितिस्तु दर्शान्ते प्रभवति येनामायामेव सूर्यग्रहणसम्भवः। सूर्यग्रहणं तु स्थानभेदेन भिन्नं भिन्नं दृश्यते। यतोहि भूपृष्ठोपरि यत्र चन्द्रबिम्बः सूर्यबिम्बस्यावरोधको भवति तत्र ग्रहणं, यत्र चावरोधको न स्यात्तत्र ग्रहणाभावः। अत एव सूर्यग्रहणमेककालावच्छेदेन सार्वदेशिको न भवति। परञ्च चन्द्रग्रहणे चन्द्रः स्वयमेव भूभायां प्रविश्यादृश्यो भवति अतश्चन्द्रग्रहणमेककालावच्छेदेन सार्वदेशिको भवति अर्थात् सर्वत्र दृश्यते। एतावता विवेचेन रविचन्द्रयोर्ग्रहणकारणन्त्ववगतमेव। परन्तु ते ग्रहणे कदा सम्पद्येते विमर्शोऽयमावश्यकः। अतोऽत्र विवेचनं प्रस्तूयते-

वस्तुतस्तु पूर्णिमायां चन्द्रग्रहणस्य अमायाञ्च सूर्यग्रहणस्य स्थितिः निरूपितास्ति। परन्तु अस्माभिः प्रत्यक्षतया अस्माभिः द्रष्टुं शक्यते यत् प्रत्येकपूर्णिमायां चन्द्रग्रहणं तथा च प्रत्येकामायां सूर्यग्रहणं न सम्भाव्यते। चन्द्रग्रहणे सपातसूर्यस्य भुजांशकाः यदा चतुर्दशांशेभ्योऽल्पास्तदैव चन्द्रग्रहणसम्भवः –

“सपातसूर्यस्य भुजांशका यदा मनूनकाः स्याद् ग्रहणस्य सम्भवः”[६]

---

[५] *सि. शि. ग्रहणवासना श्लोक सं.१ व्याख्याकारः – श्रीकेदारदत्त-जोश्री,प्रकाशनम्- मोतीलाल बनारसीदास वाराणसी,प्रकाशनवर्षम्- २०१०*

[६] *सि. शि. पर्व.स. श्लोक सं.२ व्याख्याकारः – पं. गिरजाप्रसाद द्विवेदी प्रकाशनम्- चौखम्भा विद्याभवन वाराणसी प्रकाशनवर्षम्- २००७*

सैद्धान्तिकदृष्टया छाद्यछादकबिम्बयोर्मानैक्यार्धतुल्यचन्द्रशरो यदा भवति तदा तयोः स्पर्शात् ग्रहणस्य सम्भवः, तदल्पे शरे निश्चयं ग्रहणं भवति, तदधिके च शरे ग्रहणाभावः सिद्धयति। अतोऽत्र शरज्ञानमतीवमहत्वपूर्णं वरिवर्ति।
वस्तुतः चन्द्रविमण्डलक्रान्तिवृतयोः सम्पातौ पातसंज्ञकौ भवतः तत्र एकः राहुसंज्ञकोऽपरस्तु केतुसंज्ञको भवति-

**विमण्डले भवृतस्य सम्पातः पात उच्यते**
**एवं चन्द्रस्य यौ पातौ तत्राद्यौ राहुसंज्ञकः**
**द्वितीयः केतुसंज्ञस्तौ ग्राहकौ चन्द्रसूर्ययोः।।**[७]

तत्र पातस्थानात् छाद्यच्छादकबिम्बयोः भ्रमणगत्योः सम्पातात् याम्योत्तररूपशरस्य प्रवृतिः, त्रिभान्तरे च शरस्य परमत्वं भवति अतोऽनुपातेन छाद्यच्छादकयोर्बिम्बार्धतुल्यशरस्थलस्य ज्ञानं कृत्वा ग्रहणस्येस्थितिः निर्धायते। चन्द्रग्रहणे ग्रन्थेषु चन्द्रस्य मध्यबिम्बव्यासार्धमानं षोडशकलाः (१६') मध्यमभूव्यासार्धमानं चत्वारिंशत् कलाः (४०) शरस्य परं मानं २७० कलाः पठिताः वर्तन्ते। अतोऽत्र शरस्य ज्ञानेन अभिष्टभुजज्यायाः ज्ञानं क्रियते यत् –

त्रिज्या x मानैक्यार्धज्या/ परमशरज्या

$$= \frac{३४३८ \times (१६^{।}+४०^{।})}{२७०^{।}}$$

= १८२५२८/२७०।

= ७१३। /६०

=१२°(स्वल्पान्तरेण)

अत्र २°/१०। यदा परं मन्दफलं योज्यते तदा स्वल्पान्तरेण १४° सिद्धयति।

[७] *गोलपरिभाषा व्याख्याकारः – डॉ. कमलाकान्त पाण्डेय, प्रकाशनम्- चौखम्भा सुरभारती प्रकाशनवर्षम्-*

" एवं पर्वान्ते विराह्वर्कवाहोरिन्द्राल्पांशासम्भवश्चेद् ग्रहस्य"[८]
अतोऽत्र दृश्यते-




| | |
|---|---|
| अत्र प = सम्पातस्थानम् | च न = चन्द्रबिम्बार्धः |
| प फ = भूच्छायामार्गः | त न = ग्रहणग्रासमानम् |
| भू = भूकेन्द्रम् | भू त = भूबिम्बार्धः |
| च = चन्द्रबिम्बस्य केन्द्रम् | |

अत्र यदा चन +भूत > भूच भविष्यति। तथैव तन ग्रासमानस्योत्पत्तिः भवितुं शक्यते। ग्रासमानप्रसङ्गे यथोक्तं भास्करेण -
"यच्छाद्यसंछादकमण्डलैक्यखण्डं शरोनं स्थगितप्रमाणम्" ।[९]

अर्कग्रहणस्य सम्भावनायाः विचारक्रमे सपातसूर्यस्य भुजांशमानं सप्तांशात् न्यूनं यदा भवति तदाऽर्कग्रहणं सम्भवति। यतोहि सूर्यचन्द्रयोः मानैक्यार्धं ३२। कलाः भवन्ति। अतोऽत्र पूर्वनियमानुसारेण

---

[८] *ग्रहलाघवम् च.ग्र.श्लो. सं. २ व्याख्याकारः – प्रो. रामचन्द्र पाण्डेय , चौखम्भा संस्कृत सीरीज वाराणसी प्रकाशनवर्षम् - १९९४*

[९] *सि. शि. च. ग्र. श्लो. सं. ११ व्याख्याकारः – पं. गिरजाप्रसाद द्विवेदी प्रकाशनम्- चौखम्भा विद्याभवन वाराणसी प्रकाशनवर्षम्- २००७*

त्रिज्या x मानैक्यार्धज्या/ परमशरज्या = ३४३८ x ३२। /२७०।

= ११००१६। /२७०।

= ४०७/६०

= ७°(स्वल्पान्तरेण)

अत्र सूक्ष्मगणितेन शरज्ञानार्थं सपातसूर्यस्य भुजांशाः साध्या। शरेण नत्या च संस्कृतः कर्तव्यः। दर्शान्तनतघटिका लम्बनेन संस्कार्या। उक्तमस्ति –
“तत्संस्कृतः पर्वविराम एवं स्फुटोऽसकृत् स ग्रहणमध्यकालः”[१०]

वस्तुतः सूर्यग्रहणोपकरणानि चन्द्रग्रहणस्यापेक्षया कानिचित् भिन्नानि सन्ति। अर्कग्रहणस्य साधने लम्बननत्योः ज्ञानमावश्यकं भवति। अत्र छाद्यछादकयोः कक्षाभिन्नत्वात् लम्बननत्योरुत्पत्तिः भवति। तत्र चन्द्रग्रहणे लम्बननत्योरभावः सिद्धयति यतोहि विधोर्ग्रहणे स्वयमेव छाद्यः चन्द्रः सूर्योत्पन्नभूभायां प्रविशति, अतोऽत्र छाद्यछादकयोरेककक्षात्वात् ग्रहणस्य सार्वदेशिकत्वत् लम्बननत्योरभावः भवति। परञ्च सूर्यग्रहणे छाद्यछादकयोः (सूर्यचन्द्रयोः) कक्षाभेदात् समकलकाले रवीन्दू भूगर्भप्रायेण समावपि भूपृष्ठाभिप्रायेण किञ्चिदन्तरितौ भवतः येन स्वकक्षायां लम्बितयोः चन्द्रार्कयोः गर्भभूपृष्ठाभिप्रायिकाभ्यां क्रान्तिवृते पूर्वापरान्तररूपमन्तरं लम्बनं सिद्धयति। अत्र किन्नाम लम्बनमिति जिज्ञासायां लम्ब्यत इति लम्बनम्। कस्मात् को लम्बितो भवतीति प्रश्ने कोऽपि ग्रहो भूगर्भापेक्षया भूपृष्ठाल्लम्बितो भवति अर्थात् गर्भीयग्रहापेक्षया पृष्ठीयग्रहः स्वकक्षायां यावल्लम्बितस्तावन्मितमेव लम्बनं भवति।

तथैव स्वकक्षायां लम्बितयोः चन्द्रार्कयोः गर्भीयपृष्ठीयबिम्बयो-रुपरिगतयोः कदम्बप्रोतवृत्तयोरन्तरं गर्भीयपृष्ठीयशरान्तररुपं (याम्योत्तरान्तरम्)

---

[१०] *सि.शि.सू. ग्र. श्लो. ७ व्याख्याकारः – पं. गिरजाप्रसाद द्विवेदी प्रकाशनम्- चौखम्भा विद्याभवन वाराणसी प्रकाशनवर्षम्- २००७*

नतिः भवति। सिद्धान्तग्रन्थेषु सर्वैरेवाचार्यैः ग्रहाणां गणना भूगर्भीयदृष्ट्या कृता वर्तते, परञ्च चराचराः भूपृष्ठोपरि निवसन्ति। अत एव सूर्यग्रहणे भूगर्भीयमानं भूपृष्ठीयकरणार्थं लम्बननत्योरावश्यकता विद्यते। सिद्धान्तशिरोमणौ भास्करेण लम्बननत्योः कारणमधिकृत्येत्थमेवौपमितं विद्यते तद्यथा –

**पर्वान्तेऽर्कं नतमुडुपतिच्छन्नमेव प्रपश्येद्**
**भूमध्यस्थो न तु वसुमतिपृष्ठनिष्ठस्तदानीम्।**

**तद्दृकसूत्राद्धिमरुचिरधो लम्बितोऽर्कग्रहेऽतः**
**कक्षाभेदादिह खलु नतिर्लम्बनं चोपपन्नम्॥**[११]

किञ्च

**दर्शान्तकालेऽपि समौ द्रष्टा नतौ येन विभिन्नकक्षौ।**
**क्वर्धोच्छ्रितः पश्यति नैकसूत्रे तल्लम्बनं तेन नतिं च वच्मि॥**[१२]

लम्बनम्-

अत्र संक्षेपेण क्षेत्रपुरस्सरं लम्बननत्योः परिचयः उपस्थाप्यते –

भू = भूकेन्द्रम् पृ = पृष्ठस्थानम्

ख = खमध्यम् ( रविकक्षायां खमध्यम्)

र = गर्भीयरविः र' = सूर्यकक्षायां लम्बितः पृष्ठीयचन्द्रः

च = गर्भीयचन्द्रः ख' = चन्द्रकक्षायां खमध्यम्

च' = चन्द्रकक्षायां लम्बितः सूर्यक ख प = रविकक्षावृतं दृग्वृत्ताख्यम्
ग ख' घ = चन्द्रकक्षावृत्तम्

---

*[११] सि. शि. ग्रहणवासना श्लोक सं. २ व्याख्याकारः – श्रीकेदारदत्त-जोश्री,प्रकाशनम्- मोतीलाल बनारसीदास वाराणसी,प्रकाशनवर्षम्- २०१०*

*[१२] सि.शि.सू. ग्र. श्लो. १ व्याख्याकारः – पं. गिरजाप्रसाद द्विवेदी प्रकाशनम्- चौखम्भा विद्याभवन वाराणसी प्रकाशनवर्षम्- २००७*




गर्भीयनतांशाः ∠पृ भू च            चन्द्रस्य पृष्ठीयनतांशाः =∠ ख' पृ च

अनयोरन्तरं ∠ पृ चं भू = चन्द्रस्य दृग्लम्बनम्

∠पृ र भू = सूर्यस्य दृग्लम्बनम्

अत्र स्फुटमवलोक्यते यच्चन्द्रकक्षायां चन्द्रो रविदृक्सूत्राद् भूपृष्ठस्थदृष्टुः कृते लम्बितो दृश्यते।

अतोऽत्र –
र र' = रविकक्षायां लम्बनम्

च च' = चन्द्रकक्षायां लम्बनम्

लम्बनम् दृग्लम्बन- स्पष्टलम्बनभेदेन द्विविधं सिद्ध्यति। तत्र भूगर्भस्थः पुरुषो यावद्भिरंशैग्रहं नतं पश्यति तदानीमेव भूपृष्ठस्थः पुरुषः कस्मिन्नपि काले ततोऽधिकैरेवांशैस्तं ग्रहं नतं पश्यति। तत्काले उभयोर्न्तांशयोरन्तरं लम्बनं दृग्वृत्तीयं लम्बनमिति कथ्यते, एवञ्च क्रान्तिवृत्तेऽन्तरं स्पष्टलम्बनमिति।

अत एवोक्तं भास्करेण –
"दृक्सूत्राल्लम्बितश्चन्द्रस्तेन तल्लम्बनं स्मृतम्" अर्थात् दृक्सूत्रगर्भसूत्रयोरन्तरं कक्षायां लम्बनं भवति। खमध्ये गर्भसूत्रदृक्सूत्रयोरैक्याद् दृग्लम्बनाभावः। भूपृष्ठक्षितिजे दृक्सूत्राभ्यामुत्पन्नकोणस्य परमाधिक्यं भवति अतोऽत्र

लम्बनस्य मानं परमं भवति। अत एवोक्तं- " दृक्गर्भसूत्रयोरैक्यात् खमध्ये नास्ति लम्बनम्"

किञ्च

**इत्थं ग्रहास्तोदयभूजगे यत्तोऽधिकं दृष्टिसमे परं स्यात्**
**अनन्तरं तत्त्वपचीयमानं खमध्यसंस्थे खचरे त्वभावः ॥**[13]

एवमेव गर्भाभिप्रायिकामान्तघट्यादिभ्यः घटिकादिकं लम्बनं पूर्वकपाले ग्रहे सति विशोध्य पश्चिमकपाले योज्ये सति पृष्ठीयोऽमान्तः ग्रहणमध्यकालश्च सिद्धयति।

नतिः – सूर्यग्रहणे हि रविलम्वनं तदीया नतिश्च नितरां स्वल्पतरे भवतः, किन्तु चन्द्रस्य लम्बनं नतिश्चाधिके भवतः, तेन चन्द्रशरे संस्कारार्थं नतिरवश्यं देया। अत्र नत्यानयने –

दृग्क्षेपः x दृग्लम्वज्या/ दृग्ज्या = नतिः

अस्याश्चापं कलात्मिका नतिर्भवति।

अत्र दृग्लम्वज्या = परमलम्वज्या*दृग्ज्या/त्रिज्या

तदुत्थापनेन-

दृग्क्षेपः* परमलम्वज्या * दृग्ज्या/दृग्ज्या*त्रिज्या

= दृग्क्षेपः* परमलम्वज्या/त्रिज्या = नतिः

वस्तुतः परमलम्वनं ग्रहगत्यन्तरस्य पञ्चदशांशमितं भवति अतोऽत्र परमलम्वज्या स्थाने तन्मानमुत्थापनेन -

दृग्क्षेपः * गत्यन्तरकला/ त्रिज्या*१५ = नतिः

---

[13] *सि.त.वि.सू.ग्र.श्लो.४९*

यथोक्तं सूर्यसिद्धान्ते –

दृग्क्षेपः शीततिग्मांश्वोर्मध्यभुक्त्यन्तराहतः।

तिथिघ्नत्रिज्यया भक्तो लब्धं साऽवनतिर्भवेत्॥[१४]

ध्यातव्यमस्ति यत् लम्बितचन्द्रस्य क्रान्तिवृतेन सह यदन्तरं सः स्फुटशरः भवति।

एवञ्च तत्र गर्भीयपृष्ठीयशरयोरन्तरमेव नतिः भवति।

नतेः दिशानिर्धारणं दृग्क्षेपवशादेव सम्भवति अर्थात् या दिक् दृग्क्षेपस्य भवति सा दिशैव नतेरपि ज्ञातव्या।

इत्यनया इयं नतिः उत्तरदृग्क्षेपे उत्तरा, दक्षिणे सति दक्षिणा।

स्पष्टनत्यानयने यथोक्तं भास्करः – "नती रवीन्द्वो समभिन्नदित्त्वे तदन्तरैक्यं तु नतिः स्फुटात्र"

इत्यादिना नतिशरयोः दिक्साम्ये तयोर्योगेन दिग्भेदे चान्तरेण स्पष्टशररूपा नतिः सिद्ध्यति।

ग्रहणविचारक्रमे आचार्यकमलाकरेण पृथिव्याः ग्रहणमपि कल्पितं वर्तते। यतोहि भूपृष्ठीयानां चन्द्रग्रहणकाले चन्द्रपृष्ठस्थैः जनैः सूर्यग्रहणं दृश्यते, एवमेव सूर्यपृष्ठीयानां चन्द्रग्रहणं भवति, किञ्च सूर्यग्रहणकाले चन्द्रपृष्ठीयानां कृते पृथिव्याः ग्रहणं भवति –

किञ्चेन्दुबिम्बस्य रविग्रहे या छाया पृथिव्यां पतितास्ति दृष्टा

**तत्सम्मुखेन्दुस्थितदृग्वशाच्च बुधैः प्रकल्प्यं ग्रहणं पृथिव्याः**

---

*[१४] सू. सि. सू. ग्र. श्लो. १० व्याख्याकारः – पं. गिरजाप्रसाद द्विवेदी प्रकाशनम्- चौखम्भा विद्याभवन वाराणसी प्रकाशनवर्षम्- २००७*

**व्यत्यासतः शीतलभानुवत् स्याच्चन्द्रप्रभैवावरणं हि तत्र ॥**[15]

यद्यपि अस्माकं सूर्यग्रहणमेव चन्द्रपृष्ठस्थानां कृते पृथिव्याः ग्रहणमस्ति, एतस्य प्रभावः तेषां कृते एवास्ति तथापि खगोलीयदृष्टया एतस्य ज्ञानं महत्वपूर्णमस्ति।

स्पर्शमोक्षयोः दिग्ज्ञानम्-

चन्द्रग्रहणे छाद्यश्चन्द्रः छादकापेक्षया शीघ्रगतिकः पूर्वाभिमुखं गच्छन् भूभायां प्रविशति येन चन्द्रस्य पूर्वपाल्याः छादकबिम्बे लग्नत्वात् पूर्वदिशि स्पर्शः भवति तथा च आच्छादितश्चन्द्रस्य ग्रहणादनन्तरं पश्चिमपाल्याः भूभाबिम्बस्य पूर्वपाल्या सह संयोगेन पश्चिमतः मोक्षो भवति। प्रसङ्गेऽस्मिन् यथोक्तं भास्करेण –

**पूर्वाभिमुखो गच्छन्कुच्छायान्तर्यतः शशी विशति।**
**तेन प्राक् प्रग्रहणं पश्चान्मोक्षोऽस्य निः सरतः ॥**[16]

सूर्यग्रहणे स्वक्षायां भ्रमतः चन्द्रस्य सूर्यापेक्षया शीघ्रगतित्वात् छादकः चन्द्रः सूर्यबिम्बस्य पश्चिमपाल्याः स्पर्शं करोति अतोऽत्र पश्चिमतः स्पर्शः भवति तथा च ग्रहणादन्तरं पूर्वतश्च मोक्षो भवति।

ग्रहणभेदाः –

चन्द्रार्कयोः ग्रहणे मुख्यतया त्रयो भेदाः भवन्ति –

१. खण्डग्रहणम् , २. पूर्णग्रहणम् ( सर्वग्रहणम्) ३. खग्रासग्रहणम्

खण्डग्रहणम् - खण्डग्रहणे ग्रासमानं ग्राह्यबिम्बादल्पं भवति। ग्रहणेऽस्मिन् स्पर्शः, मध्यः मोक्षश्चेति अवस्थाः भवन्ति।

---

[15] *सि.त.वि.सू.ग्र.श्लो.सं.१/२+३*

[16] *सि. शि. च. ग्र. श्लो. सं. ११ व्याख्याकारः – पं. गिरजाप्रसाद द्विवेदी प्रकाशनम्- चौखम्भा विद्याभवन वाराणसी प्रकाशनवर्षम्- २००७*



२ पूर्णग्रहणम् - ग्रहणेऽस्मिन् ग्रासमानं छाद्यबिम्बस्य तुल्यमेव भवति। अर्थात् सम्पूर्णबिम्बस्य आच्छादनं भवति।



३. खग्रासग्रहणम् - खग्रासग्रहणे ग्रासमानं

छाद्यबिम्बादधिकं भवति। येन छाद्यबिम्बेन सह किञ्चिदाकाशमानमपि आच्छादितं भवति।



एतदरिक्तं सम्पातस्थाने सूर्यचन्द्रयोः केद्रैक्यवशात् सूर्यस्य वलयग्रहणमपि भवति।



वस्तुतः पूर्णग्रहणे खग्रासग्रहणे च स्पर्शः, सम्मीलनम्, मध्यः, उन्मीलनम्, मोक्षश्चेत्यवस्थाःभवन्ति। एतेषु स्पर्शकालतः मध्यकालपर्यन्तं सम्मीलनकालः, मध्यग्रहणात् मोक्षकालपर्यन्तं उन्मीलनकालेति कथ्यते।

दृश्यादृश्यत्वविचारः -

वस्तुतः ग्रहणस्य प्रभावं भूमौपरि चराचरोपरि प्रत्यक्षतया दृश्यते। अर्थात् जनैः ग्रहणस्य प्रभावं मानवजीवनेन सह समुद्रादीनां जलेषु, वृक्षपुष्पफलादिषु अनुभूयते। ग्रहणे जपानुष्ठानदानैः अधिकस्य फलस्य प्राप्तिः भवतीति धर्मशास्त्रे वर्णनं प्राप्यते। ग्रहणे दृश्यादृश्यत्वस्य निर्धारणमतीवावश्यकमस्ति। प्रत्यक्षतया दृश्यग्रहणस्येव शुभाशुभस्य फलस्य निर्धारणं पुराणसंहितायादिषु दृश्यते। उक्तं च -

**बहुफलं जपदानहुतादिके स्मृतिपुराणविदः प्रवदन्ति हि**
**सदुपयोगीजने सचमत्कृति ग्रहणमिन्द्वनयोः कथयाम्यतः ॥**[१७]

वस्तुतस्तु ग्रहणे यदा ग्रासमानं एकाङ्गुलात्मकमानादल्पं स्यात्तदा ग्रहणस्यादेशः न कर्तव्यः – "नादेश्याऽङ्गुलाल्पो रवीन्द्वोः"

तत्र चन्द्रग्रहणे द्वादशाङ्गुलचन्द्रबिम्बस्याङ्गुलात्मकमानं अस्माभिः दृष्टुं शक्यते परञ्च सूर्यग्रहणे तस्य तीक्ष्णतावशात् त्रयाङ्गुलितमपि ग्रहणं न अवलोकयितुं शक्यते। अत एव ग्रहणविचारक्रमे दृष्टुं योग्यं ग्रासमानं यदा स्यात्तदैव ग्रहणस्यादेशं कुर्यात्।

सिद्धान्तग्रन्थेषु छायाग्रहणस्य चर्चाऽपि आचार्यैः कृता वर्तते। ग्रहणेस्मिन् चन्द्रः सूर्येणोत्पन्नभूमेः छायायाः छायायां प्रविशति। अत्र छायायाः प्रभावं चन्द्रबिम्बोपरि न भवति येन एतद् ग्रहणं अस्माभिः न दृश्यते। एतस्य प्रभावमपि मानवजीवने नानुभूयते। अतएव छायाग्रहणस्य वर्णनं अस्माकं धर्मशास्त्रे न दृश्यते। सिद्धान्तग्रन्थेष्वपि सर्वत्र एतस्य साधनं न कृतमस्ति परञ्चाधुनिकैः सम्प्रति एतस्यापि चर्चा साधनञ्च क्रियते।

---

[१७] *सि. शि. च. ग्र. श्लो. सं. १ व्याख्याकारः – पं. गिरजाप्रसाद द्विवेदी प्रकाशनम्- चौखम्भा विद्याभवन वाराणसी प्रकाशनवर्षम्- २००७*

सूर्यचन्द्रयोः ग्रहणयोः वर्णविचारक्रमे चन्द्रग्रहणे छाद्यछादकयोः वर्णद्वयसंयोगेन अर्धाल्पग्रस्तः चन्द्रः धूम्रः, अर्धग्रस्तः कृष्णः , सर्वग्रस्तश्च पिङ्गलो दृश्यते।

ध्यातव्यमस्ति यत् एकस्मिन् वर्षे ग्रहणानामधिकतमा संख्या ७ सप्त भवितुर्महति, न्यूनतमा च संख्या द्वावेव।




अत्र सम्मिलितरूपेण सूर्यचन्द्रमसोः ग्रहणयोः स्थितिः प्रदर्शिता। अत्र उपरिभागे सूर्यग्रहणस्य स्थितिः, अधश्च चन्द्रग्रहणस्याकारः द्रष्टुं शक्यते।

